पे। भा.म ४भ.मसूरिका.चि.शीतलाधिकारे। "र चारिणूत्करी हित:।"

**रञ्जिताफलम्** । क्ली । सर्षपे । वै.निघ.।

**रत्तोघ्नम्** । क्ली । काञ्जिके । हे.च. । हिङ्गुनि । रा.नि.व.५ । पुं । भल्लातकवृक्षे । चिका. । श्वेतसर्षपवृक्षे । रा.नि.व.१६ । भैष.सुन्दरी.चि. । नागरङ्गवृक्षे । मद.व.४। स्त्री (घ्नी) । वचायां । प.मु. ।

**रत्तोभूत:** । पुं । श्वेतसर्षपवृक्षे । प.मु.। [व.१२।

**रत्तोहा** (न) । पुं । महिषाक्षगुग्गुलौ । रा.नि.

**रा:** । पुं, स्त्री । काञ्चने । श.र. । अम. ।

**राका** । स्त्री । दृष्टरजस्कायां कन्यायां । हारा.। पूर्णिमायां । कच्छूरोगे । मे. ।

**राग:** । पुं । मरीचके योगविशेषे, रागषाड़वे । च.सू.१८अ. । "सिताकृचकसिन्धूत्थै: सवृक्षाम्लपरूषकै: । जम्बूफलरसैर्युक्तोरागोराजिकयान्वित: ॥" सि.यो.मरीच.चि. । अलक्तके । सिन्दूरे । वै.निघ.।

**रागखा(षा)ड़(ख)ण्ड(ण्ड)व:** । पुं । खाद्यद्रव्यभेदे । আমের মোরব্বা । तत्करणक्रम:—"आममाम्रं त्वचाहीनं द्विखिर्वा खण्डितं तत: । आष्टमाज्ये मनागम्लं खण्डपाकेऽथ युक्तित: । सुपक्व समुत्तार्य्य मरीचैलेन्दुवासितं । स्थापितं स्निग्धभाण्डे रागखाण्डवसंज्ञित: । पुष्टिदो बलद: पित्तवातास्रारुचिनाशन: । स्निग्धोगुरुस्तर्पणश्च सुस्वादूरागखाण्डव: ॥" द्रव्यगुण: । वा.चि.१२अ. । दाड़िमद्राक्षारसयुक्तमुद्गयूषे । "स तु दाड़िमम्रद्वीकायुक्त: स्याद्रागषाड़व: ।" गुणा:—"रुचिकृल्लघुपाकश्च दोषाणामविरोधकृत् ।" राज.३प. ।

**रागचूर्ण:** । पुं । खदिरवृक्षे । मे.। फल्गुचूर्णे । श.र. । लाक्षारसे । रा.नि.व.६ । [क्षारसे ।

**रागद:** । पुं । तैरणीक्षुपे । रा.नि.व.४ । ला-

**रागदालि:** । पुं । मसूरे । रा.नि.व.१६ ।

**रागदृ(ष्ट)क्** । पुं । माणिक्ये । रा.नि.व.१३ ।

**रागपुष्प:** । पुं । बन्धुजीवपुष्पक्षुपे । बान्धुलि गाछ । रक्ताम्लाने । रा.नि.व.१०। [रा.नि.व.१०।

**रागपुष्पी** । स्त्री। ओड्रपुष्पवृक्षे । जवा गाछ ।

**रागप्रसव:** । पुं । बन्धुजीववृक्षे । रक्ताम्लानपुष्पवृक्षे । रक्तझाँटी । रा.नि.व.१० ।

**रागसारा** । स्त्री । मन:शिलायाम् । वै.निघ.।

**रागसूत्रम्** । क्ली । पट्टवस्त्रे । मे. । [नि.व.६।

**रागाङ्गी (ङ्ग्या)** । [illegible] । मञ्जिष्ठायां । रा.

**रागी** (इन्) । [illegible] तृणधान्यविशेषे । मं नाचणी । क रविगुच्छे । गुणा:—तिक्तो मधुर: कषाय: शीत: पित्तासघ्न: बलदश्च । रा.नि.व.१६ । अशोकवृक्षे । वै.निघ. । [१०।

**रागी (तरु:)** । पुं । अशोकवृक्षे । रा.नि.व.

**रागोष्टम्** । क्ली । सुगन्धरोहिषतृणे । वै.निघ.।

**राघव:** । पुं। तिमिङ्गिलमत्स्ये । मे. ।

**राङ्कल:** । पुं । तरुकण्टके । গাছের কাঁটা । हारा. । [ङ्कवं मृगलोमजम् ।" अम. ।

**राङ्कवम्** । क्ली । पशुलोमजातवस्त्रादौ । "रा-

**राङ्गणम्** । क्ली । रङ्गणपुष्पे । রঙ্গণ ফুল। गुणा:—रक्तपित्तघ्नम् । राज.५प. ।

**राजकम्** । क्ली । कृष्णागुरुणि । वै.निघ. ।

**राजकदम्ब:** । पुं । कदम्बविशेषे । जटा. ।

**राजकन्या** । स्त्री । केवुके । केविकापुष्पवृक्षे । रा.नि.व.१० । वै.निघ.जीर्णज्व.चि.कलिङ्गादि: ।

**राजकर्कटी** । स्त्री। चीनकर्कट्यां।रा.नि.व.७।

**राजकशेरु: (क:)** । पुं । भद्रमुस्तायां । रा. नि.व.६ । [वै.निघ. ।

**राजकार्श:** । पुं । शालवृक्षे । শাল গাছ।

**राजकाष्ठम्** । क्ली। पत्तङ्गचन्दने । বকম কাঠ । वै.निघ. । [गाछ । प.मु. ।

**राजकुलक:** । पुं । पटोललतायां । পটোল

**राजकुष्माण्ड:** । पुं । वार्त्ताकौ । বেগুন গাছ । जटा. । [कुल । रा.नि.व.११

**राजकोल:** । पुं । राजबदरवृक्षे । নারকুলে

**राजकोषातकी** । स्त्री । पीतघोषायाम् ঝিঙা । प.मु. । हिं घियातरुइ । तोरइ । मद. गुणा:—शीतला मधुरा कफवातला पित्तघ्नी दीपनी श्वासज्वरकासकृमिघ्नी च । भा.पू.१भ.शा.व

**राजखर्जूरी** । स्त्री । पिण्डखर्जूरे । বড় পিণ্ড খেজুর। गुणा:—गौल्या स्वादे हिमा गुरु: पित्तदाहघ्नी श्वासश्रमघ्नी वीर्य्यकरी च । रा.नि.व.११

**राजगिरा (रि:,री)** । स्त्री । शाकविशेषे । राजशाक। लघुस्थूलभेदेन द्विधा । गुणा:—रूक्षा पित्तघ्नी शीतला च । स्थूला अतिशीतला अतिरूक्षा च । रा.नि.व.७ । वृहज्जम्बूवृत्ते । वै.निघ. ।

**राजग्रीव:** । पुं । मत्स्यविशेषे । रुलुइ माछ । त्रिका. । [फूल । सु.सू.३८ऋ.एलादि. ।

**राजचम्पकम्** । क्ली । पुन्नागपुष्पे । पूनाङ्

**राजचिह्नकम्** । क्ली । शिश्ने । श.च. ।

**राजजम्बु: (म्बू:)** । स्त्री । महाजम्बूवृत्ते । बड़ जाम गाछ । र.मा. । हिं फलेन्दा । तें रानेरेड़िचेट्टु । गुणा:—"राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् ।" भा. । पिण्डखर्ज्जूरे । मे. ।

**राजयक्ष्मा** । पुं । स्वनामख्यातरोगे । यक्ष्मा रोग, क्षय रोग । निदानम्—"वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् । त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥" अस्य निरुक्ति:—"वैद्यो व्याधिमता यस्माद्राधिर्य्येन यच्यते । स यक्ष्मा प्रोच्यते लोके शब्दशास्त्रविशारदै: । राज्ञश्चन्द्रमसो यस्मादभूदेष किलामय: । तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिण: । क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधै: । संशोषणाद्रसादीनां शोष इत्यभिधीयते ॥" सम्प्राप्ति:—"कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु । अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा: । क्षीयन्ते धातव: सर्व्वे तत: शुष्यति मानव: ॥" पूर्व्वरूपं—"श्वासाङ्गसादकफसंस्रवतालुशोषवम्यग्निसादमदपीनसकासनिद्रा: । शोषे भविष्यति भवन्ति स चापि जन्तु: शुक्लेक्षणो भवति मांसपरो रिरंसु: । स्वप्नेषु काकशुकशल्लकनीलकण्ठगृध्रास्तथैव कपय: कृकलासकाश्च । तं वाहयन्ति स नदीर्विजलाश्च पश्येत् शुष्कांस्तरून् पवनधूमदवार्द्दितांश्च ॥" इति । त्रिरूपक्षयलक्षणं—"अंसपार्श्वाभितापश्च सन्ताप: करपादयो: । ज्वर: सर्व्वाङ्गगश्चैव लक्षणं राजयक्ष्मण: ॥" एकादशरूपस्य यथा—"स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपादयो: । ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागम: । शिरस: परिपूर्णत्वमभक्तच्छन्द एव च । कास: कण्ठस्य चोद्ध्वंसो विज्ञेय: कफकोपत: । एकादशभिरेतैर्वा षड्भिर्वापि समन्वित: । कासातिसारपार्श्वार्त्तिस्वरभेदारुचिज्वरै: । त्रिभिर्वा पीड़ितं लिङ्गै: ज्वरकासासृगामयै: । जह्यात्शोषार्दितं··· । महाशिनं क्षीयमाणमतीसारनिपीड़ितं । शूनमुष्कोदरञ्चैव यक्ष्मिणं परिवर्ज्जयेत् । ज्वरानुबन्धरहितं बलवन्तं क्रियासहं । उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥" मा.नि. ।

**राजजीरकम्** । क्ली। (C. Tribocularis.) जीरकभेदे । वम्. कुरुकुरटज । कीषान्तरम् ।

**राजतर(रु)णी** । स्त्री । पुष्पविशेषे, महातरणीपुष्पवृत्ते । बड़ शेउती । म राजतरुणी । क हिरियचेवड़े । गुणा:—कषाया कफकरी चक्षुष्या हृद्या सुगन्धिश्च । रा.नि.व.१० ।

**राजतरु:** । पुं । कर्णिकारवृत्ते । छोटि शोणालु । रा.नि.व.६ । आरग्वधवृत्ते । बड़ शोणालु । वै.निघ. ।

**राजताल:** । पुं । गुवाकवृत्ते । त्रिका. । नारिकेलवृत्ते । वै.निघ. ।

**राजतालेश्वर:** । पुं । कुष्ठाधिकारे रस: । पाठ:—"नागस्य भस्म शाणैकं तोलकं गन्धकस्य च । द्विनिष्कं शुद्धतालस्य समुद्भूतं गवां जलै: । विपचेत् पीड़शगुणै: पाचे तासमयं शनै: । घर्म्मे द्विघस्रं जम्बीरकुमारीवज्रकन्दजै: । रसैर्भल्लातस्य चाम्भोभिर्युतं वल्लद्वयं भजेत् ॥" र.सा.सं. ।

**राजतिमिश:** } पुं । चैलाने, सुखाशे । उरु-
**राजतमिष:** } मुज । हारा. । त्रिका. । See. कालिन्द: । [त्रिका. ।

**राजदन्त:** । पुं । दशनानामग्रस्थदन्तचतुष्टये ।

**राजद्रुम:** । पुं । किरमाले, आरग्वधवृत्ते । शोन्दाल गाछ । हिं घनवहेड़ा । भैष.सु.रो.चि. सि.पी.च.द.कफारोचक-चि. । "राजद्रुमाम्बुना ।" भा.म.४भ.मुख.रो.चि. । "यष्ट्याह्वराजद्रुमचन्दनैश्च ।"

**राजधत्तू(स्तू)रक:** । पुं । वृहद्धत्तूरके । रा.नि.व.१०। पीतधुस्तूरवृत्ते। कनकधुतुरा। वै.निघ.।

**राजधान्यम्** । क्ली । राजान्ननामकशालिधान्ये, नृपान्ने । राजभोग हैमन्तिक धान्यविशेष । श्यामाके । श्यामाधान । रा.नि.व.१६ ।

**राजधुस्तूरक:** । पुं । वृहद्धुस्तूरके । पीतधुस्तूरवृत्ते । रा.नि.व.१० ।

**राजधूर्त्तः** । पुं । पीतधुस्तूरे । वै.निघ. । वृह-ड्डुस्तूरवृक्षे । रा.नि.व.१० ।

**राजनगः** । पुं । राजगिरिशाके । वै.निघ. ।

**राजनामा** (न्) । पुं । पटोले । रा.नि.व.३ ।

**राजनिम्बूकः** । पुं । निम्बूविशेषे । কাগজী লেবু । वै.निघ. ।

**राजनीलम्** । क्ली । मरकतमणौ । श.र. ।

**राजनीलिका** । स्त्री । महानील्यां । বড় নীল । रा.नि.व.४ ।

**राजन्यः (न्या)** । पुं, स्त्री । राजादनवृक्षे । ক্ষীরিণী গাছ । जटा. । भा. । रा.नि.व.१२ ।

**राजन्यावर्त्तः (कः)** । पुं । राजावर्त्तमणौ ।

**राजपटोलः** । पुं । मधुरपटोले । र.मा. ।

**राजपटोलिका (ली)** । स्त्री । मधुरपटोल्याम् । रा.नि.व.३ ।

**राजपट्टः** । पुं, क्ली । कान्तपाषाणे । চুম্বুক পাথর । त्रिका. । र.सा.सं.वृहच्चूड़ामणिरसे ।

**राजपट्टिका** । स्त्री । चातकपक्षिणि । हारा. ।

**राजपत्नी** । स्त्री । पित्तले । वै.निघ. ।

**राजपर्णी** । स्त्री । प्रसारण्यां लतायां । গন্ধভাদুলিয়া । रा.नि.व.५ ।

**राजपलाण्डुः** । पुं । रक्तपलाण्डौ । ছোট পেয়াজ । मं कं रक्तकान्दा, लोहितबीजल्लि, कोंपिनउल्लि, वायउल्लि । गुणाः—शीतलः पित्तघ्नः कफघ्नः दीपनः बहुनिद्राकरश्च । तथाच—"वक्ष्यते नृपपलाण्डुलक्षणं चारतीक्ष्णमधुरो रुचिप्रदः । कण्ठशोषशमनोऽतिदीपनः श्लेष्मपित्तशमनोऽतिवृंहणः ॥" रा.नि.व.७ ।

**राजपीलुः** । पुं । महापीलुवृक्षे । रा.नि.व.११ ।

**राजपुत्रः (कः)** । पुं । चीरिकावृक्षे । महाराजचूतवृक्षे । भा. । रा.नि.व.११ ।

**राजपुत्रिका** । स्त्री । शरारिपक्षिणि । শরাল পাখী । जटा. । शुक्लयूथिकायाम् । पित्तले । वै.निघ. ।

**राजपुत्री** । स्त्री । कटुतुम्ब्याम् । তিৎলাউ । रा.नि.व.३।२३ । रेणुकायां । রেণুক বীজ । रा.नि.व.६।२३ । जातीपुष्पवृक्षे । চামেলী ফুলের গাছ । रा.नि.व.१०।२३। राजरीतौ । বেঙ্গাপিতল । रा.नि.व.१३ । कुकुन्दर्य्याम् । ছুঁচো । रा.नि.व.१९ । वनमल्लिकायाम् । वै.निघ. । मालत्याम् । जटा. । [गाछ । श.च. ।

**राजपुष्पः** । नागकेशरवृक्षे । নাগেশ্বর

**राजपुष्पी** । स्त्री । कोङ्कणदेशे करवीरुणीनाम्ना ख्याते पुष्पवृक्षे । रा.नि.व.१० । वनमल्लिकायाम् । जातीपुष्पवृक्षे । वै.निघ. ।

**राजपूज्यम्** । क्ली । स्वर्णे । वै.निघ. ।

**राजप्रियः** । पुं । राजपलाण्डौ । रा.नि.व.७ । करुणीपुष्पवृक्षे । वै.निघ. । स्त्री (या) । कोङ्कणदेशे ख्याते करुणीपुष्पवृक्षे । रा.नि.व.१० । तिलवासिनीशालौ । रक्तकशालौ । रा.नि.व.१६ ।

**राजफणिज्झकः** । पुं । नागरङ्गवृक्षे । श.मा. ।

**राजफलः** । पुं । राजाम्रवृक्षे । राजादनीवृक्षे । খিরনী গাছ । रा.नि.व.११ । क्ली । पटोले । त्रिका. । स्त्री (ला) । राजजम्बूवृक्षे । বড় জাম গাছ । रा.नि.व.११ । [गाछ । वै.निघ. ।

**राजफलुः** । पुं । काकोदुम्बरवृक्षे । কাকডুমুর

**राजबदरम्** । क्ली । रक्तामलके । लवणे । मे. । पुं । उत्तमबदरवृक्षे । নারকুলে, পাটনাই প্রভৃতি বড় ও মিষ্টকুল । मं राजबोर । कं रायपरतक । गुणाः—मधुरः शीतः दाहपित्तवातघ्नः वृष्यः वीर्य्यवृद्धिकरः शोषश्रमहरश्च । रा.नि.व.११ । [त्र्य । रा.नि.व.५

**राजबला** । स्त्री । प्रसारण्याम् । গন্ধভাদুলি

**राजभक्तम्** । क्ली । नृपभोज्यान्नपानादौ च । রাজার অন্ন । तत्परीक्षा—"नृपभक्ताहुलिं न्य सविषम्भक्षयन्ति ये । तत्रैव ते विनश्यन्ति मक्षिकावायसादयः । हुतभुक् तेन चान्नेन भृशं चटचटायते । मयूरकण्ठप्रतिमो जायते चापि दुःसहः । दुष्टान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः पृषतो विसृजत्यश्रु विष्ठां मुञ्चति मर्कटः ॥" कल्प.१ अ. ।

**राजभट्टिका** । स्त्री । जलपुत्रीपक्षिणि । जट

**राजभद्रकः** । पुं । पारिभद्रकवृक्षे । निम्बवृ

कुष्ठे । কুড় । कन्दुरुके । रा.नि.व.२३। राजार्के । শ্বেত আকন্দ । रा.नि.व.१२ । [नि.व.१६ ।

**राजभावा** । स्त्री । तिलवासिनीशालौ । रा.

**राजभोगः** । पुं । शालिधान्यविशेषे । রাজভোগ ধান । रावणः ।

**राजभोग्यम्** क्ली । जातीकोषे । জায়ফল । पुं । प्रियालवृचे । श.च. । त्रि । राजभोगार्हे ।

**राजमण्डूकः** । पुं । महामण्डूके । বড় বেঙ, সোণাবেঙ । रा.नि.व.१८ ।

**राजमान्यम्** । क्ली । पटोले । वै.निघ. ।

**राजमाषः** । पुं । (Vigna catiang. Syn. Dolichos sinensis.) माषविशेषे । বরবটী । हिं लोबिया, रैस, बोड़ा । मं नील चवीद । कं नीलउण्डु । गुणाः—कफपित्तहरः रुच्यः वातलः बलकरश्च । रा.नि.व.१६ । "राजमाषः सरो रुच्यः कफशुक्राम्लपित्तकृत् । स स्वादुर्वातलो रुचः कषायो विषदो गुरुः ॥" च.सू.२७ अ. । स श्वेतरक्तकृष्णभेदेन त्रिविधः । एषु यो महान् स एव गुणाधिको ज्ञेयः । भा.पू.१भ.धा. व.। तत्सूपगुणाः—"राजमाषभवः सूपः स्वादूरूचः कषायकः । ग्राही गुरुर्वातकरः स्तन्यकृद्रुचिकारकः ॥" द्रव्यगुणः ।

**राजमुद्गः** । पुं । मकुष्ठके । ভাল মুগ । हे.च.।

**राजमृगाङ्कः** । पुं । राजयक्ष्माधिकारे रसः । पाठः—"रसभस्म त्रयो भागा भागैकं हेमभस्मकं । मृततास्रस्य भागैकं शिलागन्धकतालकं । प्रति भागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् । वराटिका तेन पूर्य्या आजचीरेण टङ्कणं । पिष्ट्वा तेन मुखं रुद्धा मृद्भाण्डे तं निरोधयेत् । शुष्कं गजपुटे पाच्यं चूर्णयेत् स्वाङ्गशीतलं । दशपिप्पलिकैः चौद्रैः मरिचैर्वा घृतान्वितैः ॥" मात्रा ४ गुञ्जा । রস ৩ তো. স্বর্ণ ১ তো. তাম্র ১ তো. শুদ্ধ মনছাল, গন্ধক, হরিতাল প্রত্যেকে ২ তো. একত্র চূর্ণ করিয়া বড় বড় কড়ির ভিতর পুরিয়া ছাগ দুগ্ধে সোহাগা মাড়িয়া তদ্দ্বারা কড়ির মুখ বন্ধ করত মৃদ্ভাণ্ডে রুদ্ধ করিয়া গজপুটে পাক করিবে । শীতল হইলে তুলিয়া ১০টা পিপুল বা মরিচ ১০টা, বা ১৯টার সহিত ঘৃত ও মধু অনুপানে সেব্য । মাত্রা ৪রতি । र.सा.सं. ।

**राजयक्ष्मा** । पुं । See राजजक्ष्मा ।

**राजयोग्यम्** । क्ली । चन्दने । वै.निघ. ।

**राजरङ्गम्** । क्ली । रजते । श.र. ।

**राजराजिका** । स्त्री । राजसर्षपे । কাল সরিষা । रा.नि.व.१६ ।

**राजराजेश्वररसः** । पुं । कुष्ठाधिकारे रसः । पाठः—"त्रिफला खादिरं सारममृता वाकुचीफलं । आतपे मर्दयेत् सूतं गन्धकं मृतताम्रकं । सुहस्तमर्दितं तालं यावत्तन्न विलीयते । भृङ्गराजद्रवं दत्त्वा दिनमात्रं विमर्दयेत् । प्रत्येकं मृततुल्यं स्यात् चूर्णीकृत्य विमर्दयेत् । मध्वाज्याभ्यां लौहपात्रे कर्षाभ्यां भक्षयेत्ततः ······ ॥" र.सा.सं. ।

**राजरीतिः** । स्त्री । पित्तलविशेषे । বেঙ্গা-পিতল । गुणाः—तिक्ता शीता लवणरसा शोधनी पाण्डुवातक्रिमिप्लीहपित्तघ्नी च । रा.नि.व. १३ । [११ ।

**राजलक्ष्मीः** । स्त्री । कदलीवृचे । रा.नि.व.

**राजवर्त्तः** । पुं । राजावर्त्तमणौ । हिं रावटी । भा.म.कर्णरो.चि. । "नीलकं राजवर्त्तम् ।"

**राजवल्लभः** । पुं । राजाम्रे । খাস আম । राजन्दरे । राजादनीवृचे । খীর্ণী গাছ । रा.नि. व.११। नारायणदासकृतद्रव्यगुणग्रन्थविशेषे । ग्रहण्यां रसः । पाठः—"जातीफललवङ्गाब्दत्वगेलाटङ्करामठं । जीरकं तेजपत्रञ्च यमानीविश्वसैन्धवं । लौहमभ्रं सताम्रञ्च रसगन्धकमेव च । मरिचं त्रिवृता रूप्यं प्रत्येकं तोलकोन्मितं । धात्रीरसे वटीं कुर्य्यात् द्विगुञ्जाफलमानतः । हन्ति शूलं तथा गुल्ममामवातं सुदारुणं ॥" रस.र. ।

**राजवल्ली** । स्त्री । कारवेल्लके । উচ্ছে । हिं करला । र.मा. ।

**राजवाहः** । पुं । घोटके । श.च. ।

**राजवृक्षः** । पुं । आरग्वधवृचे । प.मु.। च.द. मू.कृ.चि.परिणामशूले । र.सा.सं.। सु.सू.३६अ. । सु.चि.१० । पियालवृचे । मे. । लकुचाख्यायिवृचे । লকামোজু । .च. । भा.योनिरो.चि. । "पथ्या-

"[illegible]।" [illegible] । [illegible] । [illegible] ।
[शाक । [illegible] ।

**[illegible]:** । पुं । पाट इति ख्यातवृक्षे । পাট

**[illegible]:** । पुं । वास्तूकशाके । বেতো শাক । [illegible] । रा.नि.व.७ ।

**राजशाकिनी** । स्त्री । राजगिरिनामपत्र शाके । রাজ শাক, বেতো শাক । गुणाः— [illegible] त्रिदोषघ्नी शीतला च । रा.नि.व.७ ।

**राजशालिः** । पुं । राजभोग्यशालिधान्यविशेषे । রাজভোগ হৈমন্তিক ধান্য । प.मु. ।

**राजशिम्बी** । स्त्री । श्वेतशिम्बग्राम् । निष्पावे । वै.निघ. । [हिं राजशुगा । रा.नि.व.१८ ।

**राजशुकः** । पुं । पक्षिविशेषे । ময়না পাখী ।

**राजशूकजम्** । क्ली । शालिधान्ये । হৈমন্তিক ধান্যবিশেষ । प.मु. ।

**राजशृङ्गः** । पुं । मद्गुरमत्स्ये । हे.च. ।

**राजसफरः** । पुं । इल्लिषमत्स्ये । हारा. ।

**राजसर्पः** । पुं । सर्पविशेषे । রাজ সাপ । त्रिका. । हे.च. ।

**राजसर्षपः** । पुं । राजिकायां, कृष्णवर्णसर्षपे । রাইসরিষা, কাল সরিষা । हिं राइ । गुणाः—तिक्तः कटुः उष्णः वातशूलघ्नः पित्तदाहजनकः गुल्मकण्डूकुष्ठव्रणघ्नश्च । रा.नि.व.१६ ।

**राजसारसः** । पुं । मयूरे । श.मा. ।

**राजसी** । स्त्री । श्वेततुलस्याम् । वै.निघ. ।

**राजसुषवी** । स्त्री। कारवेल्लभेदे । গয়াকরলা। प.मु. । [निलाकीरवटा । वै.निघ. ।

**राजसैरेयकः** । पुं । नीलझिण्ट्यां । वम्.

**राजस्कन्धः** । पुं । घोटके । त्रिका. ।

**राजस्वर्णः** । पुं । राजधुस्तूरवृक्षे । কনকধুতুরা । रा.नि.व.१० ।

**राजहंसः** । पुं । लोहितचञ्चुचरणश्वेतहंसे । রাজহাঁস । अम. । कदम्बवृक्षे । मे. ।

**राजहर्षणम्** । क्ली। तगरपुष्पे । रा.नि.व.१०।

**राजहासः (कः)** । पुं । मत्स्यविशेषे । কাৎলা মাছ । श.र. ।

**राजक्षवः (कः)** । पुं । राजसर्षपे । রাই [illegible] কাল সরিষা । रा.नि.व.१६ । तच्छाकगुणाः— "......त्रिदोषशमनं लघु । ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणां ॥" च.सू.२७अ. । किङ्किणी[illegible] হেঁচো । वै.निघ. । दुग्धिकायाम् । च.सू.४[illegible] संहर्षौ । [वै.निघ.

**राजा (न्)** । पुं । किङ्किनीवृक्षे । হেঁচো

**राजाग्रः** । पुं । राजगिरिशाके । वै.निघ. ।

**राजातनः** । पुं । पीतशालवृक्षे । পেয়াশাল रा.नि.व.११ ।

**राजादनः** । पुं । चीरिणीवृक्षे । क्षीरिणी किंशुकवृक्षे । पलाशवृक्षे । प.मु. । पीतशालवृक्षे रा.नि.व.११ । क्ली । पीतशालफले । सु.सू.३[illegible] अ.परूषकादिः । किंशुकपुष्पे । मे. । चीरिकाफले । খির্ণীফল । प.मु. । [গাছ । वै.निघ.

**राजादनफलः** । पुं । चीरिणीवृक्षे । খি[illegible]

**राजादनी** । स्त्री । (Mimusops hexandra.) स्वनामख्यातस्वादुफलवृक्षविशेषे । खिरणी इति गौर्ज्जरे प्रसिद्धा । খিরণী, ক্ষীরখে[illegible]র । हिं चीरी । रायणी, रैवणी इति महाराष्ट्रे । वम्. कैर्णी । ता. पल्ल । गुणाः—मधुरा पित्तघ्नी गुरुः तर्पणी वृष्या स्थौल्यकरी स्निग्धा मेहघ्नी च । रा.नि.व.११ । फलं गुरु स्निग्धं स्वादु कषायञ्च । सु.सू.४६अ. । [illegible]रं स्वादु च । [illegible] १७अ. । तिलवासिनी [illegible] । रा.नि.व.१६ ।

**राजाद्रिः** । पुं । [illegible]गिरिशाकक्षुपे । वै.निघ

**राजान्नम्** । क्ली । कर्णाटदेशे प्रसिद्धे शालिधान्यभेदे । রাজভোগ, হৈমন্তিক ধান্যবিশেষ गुणाः—त्रिदोषघ्नं सुस्निग्धं मधुरं लघु दीपनं [illegible] बलकृत् पथ्यं कान्तिदं वीर्य्यवर्द्धनञ्च । तच्च त्रिविधम् शूकश्वेतरक्तकृष्णभेदेन, उत्तरोत्तरं रसाधिकञ्च त्रैविध्याच्च तण्डुला हरितपीतलोहिताः सामान्ततो भवन्ति । गुणैश्च पूर्व्वपूर्व्वोत्तराः । सु. । रा.नि.व.१६ ।

**राजाम्रः** । पुं । आम्रविशेषे । मं राजांवा । रायमञ्जु । तें राचमामिडिचेट्टु । भा. । गुणाः— कोमलाः राजाम्राः— कट्वम्लाः पित्तदाहकराश्च सुपक्वास्तु—स्वादुमाधुर्य्याः बलपुष्टिवीर्य्यप्रदाश्च

त्रिविधं बालमध्यपक्वभेदेन । त्रिष्वेव रा-
म्लमाधिक्यसाम्यं वर्त्तते । गुणाधिक्यन्तु उत्त-
रोत्तरं ज्ञेयम् । किञ्च एषां बालफलं कफवातरक्त-
पित्तजनकम् । मध्यं फलं तादृशमेव गुणसम्पन्नं
फलं परं कषायाम्लञ्च । पक्वफलं मधुरं त्रि-
दोषघ्नं तृष्णादाहश्रमश्वासारोचकहरं गुरु हिमञ्च ।
रा.नि.व.१० । [निघ. ।

**राजाम्रातकः** । पुं । राजाम्रातकवृक्षे । वै.

**राजाम्लः** । पुं । अम्लवेतसे । रा.नि.व.६ ।

**राजार्कः** । पुं । श्वेतार्के । श्वेत आकन्द । र.
मा. । मं मन्दार । वं मंदारवृक्षे । गुणाः—कटु-
तिक्तोष्णः कफमेदोविषघ्नः वातकुष्ठव्रणघ्नः शोथक-
ण्डूविसर्पघ्नश्च । रा.नि.व.१० ।

**राजार्हम्** । क्ली । अगुरुकाष्ठे । मे. । कर्पूरे ।
कृष्णागुरुकाष्ठे । वै.निघ. । शालिधान्यविशेषे ।
राजभोग धान । रा.नि.व.१६ । स्त्री (र्हा) ।
जम्बूवृक्षे । जाम गाछ । रा.नि.व.११ ।

**राजालाबुः** । स्त्री। स्वादुतुम्ब्यां । मिठा लाउ।
गुणाः—गुरुः वृष्या कफपित्तघ्नी च । मद. ।

**राजालुकः** । पुं। महाकन्दे । रशुन । द्वारा.।

**राजावर्त्तः** । पुं । स्वनामख्याते उपरत्नभेदे ।
स्फटिकजातौ । हिं रेवटी । गुणाः—शीतलः क-
टुः स्निग्धः पित्तघ्नः सौभाग्यजनकश्च । लक्षणं—
"निर्गौरितमसितं मसृणं नीलं गुरु निर्मलं बहु-
च्छायम् । शिखिकण्ठसमं सौम्यं राजावर्त्तं वदन्ति
जात्यमणिम् ॥" रा.नि.व.१३ । [चिका. ।

**राजाहिः** । पुं । द्विमुखसर्पे । राज साप ।

**राजाह्वम्** । क्ली । कर्णिकारफले । कनिका
फल वा चीनेर करवी फल । वा.सू.१५अ. ।
स्त्री (ह्वा) । राजादनीवृक्षे । श्वेतार्कवृक्षे । वै.निघ.।

**राजिका** । स्त्री । (Brassica juncea, Syn. Sinapis juncea or Brassica nigra.) श्वेतराजिकायाम् । गौरसर्षपे । श्वेत
राइ । राजसर्षपे । काल सरिषा, राइ, कृष्ण
राइ । मे. । रक्तसर्षपे । राइ । रा.नि.व.१६ ।
गुणाः—"राजिका कफपित्तघ्नी तीक्ष्णोष्णा रक्त-
पित्तकृत् । किञ्चिद्रूक्षाग्निदा कण्डूकुष्ठकोठकमीन्ह-
रेत् । अतितीक्ष्णा विशेषेण तद्वत्कृष्णापि राजि-
का ॥" भा. । राजिकातैलगुणाः तीक्ष्णं वाता-
दिदोषघ्नं शीतलं कटु पुंस्त्वघ्नं वीर्यं लघ्वोषमाशन-
ञ्च । रा.नि.व.१५ । तत्पत्रगुणाः—कटूष्णं कृमि-
वातकफघ्नं कण्डूरोगघ्नं स्वादु दीपनञ्च । रा.नि.
व.७ । यवक्षरीख्यातके माने । "ताभिः षड्भिश्च रा-
जिका ।" प.प्र. । क्षुद्रोदुम्बरे । केदारे । मे. । क्षु-
द्ररोगभेदे । घामाचि । मा.नि. । [१६ ।

**राजिकाफलः** । पुं । गौरसर्षपे । रा.नि.व.

**राजिकाह्वा** । स्त्री । तन्नामकक्षुद्ररोगभेदे ।
घामाचि । लक्षणं यथा—"घर्मस्वेदपरीतेऽङ्गे
पिटिकाः सरुजो घनाः । राजिकावर्णसंस्थानप्र-
माणा राजिकाह्वयाः ॥" वा.उ.३१अ. ।

**राजिचित्रः** । पुं । राजिमत्सर्पविशेषे । सु.
कल्प.४अ. । [रा.नि.व.७ ।

**राजिफला** । स्त्री । चीनककर्कटीलतायाम् ।

**राजिभः** । पुं । दुण्डुभसर्पे । ढोँड़ा साप ।
वै.निघ. । [झिङे, धुन्दुल । भा.पू.१भ.शा.व. ।

**राजिमत्फला** । स्त्री । मधुरकोषातक्याम् ।

**राजि(जी)मान्** । पुं । भौमसर्पभेदे । लक्षणं
—"राजीमन्तस्तु राजिभिः । स्निग्धा विचित्रव-
र्णाभिस्तिर्य्यगूर्द्ध्वं विचित्रिताः ॥" तेन दष्टस्य प्रथमे
वेगे रक्तं दुष्टं पाण्डुतां गच्छति । द्वितीये अति-
गात्रगुरुत्वं । तृतीये दंशविक्लेदादयः । चतुर्थे म-
स्तकगुरुत्वादयः । पञ्चमे गात्रभङ्गादयः । शेषयोः
दर्व्वीकरवत् । वा.उ.३६अ. ।

**राजिलः** । पुं । डुण्डुभसर्पे । ढोँड़ा साप ।
अम. । पटोले । सर्पजातिविशेषे । तद्भेदा यथा—
पुण्डरीकराजिचित्राङ्गुलराजिबिन्दुराजिकर्द्दमकतृ-
णशोषकसंसर्पकश्वेतहनुदर्भपुष्पचक्रकगोधूमकक्कि-
कसादास्त्वेति । वा. ।

**राजिलफला** । स्त्री। एर्व्वारुकभेदे । वै.निघ.।

**राजी** । स्त्री । रक्तसर्षपे । राइसरिषा । रा.
नि.व.१६ । वै.निघ.२भ.दुर्जलज्व.चि.शुण्ठ्यादिक-
ल्के । वाकुच्याम् । सोमराज । तिक्तपटोले । म-
त्स्यविशेषे । वै.निघ. ।

**राजीफलः** । पुं । पटोललतायाम् । भा.म.१
भ.चित्तभ्रम.ज्व.चि. । "राजीफलैः संयुताः ।"
तिक्तपटोले । तित्पल्ता । वै.निघ. ।

**राजीमती** । स्त्री । लिङ्गनाशरोगस्योपद्रवविशेषे ; यथा —"राजीमतीदृङ्निचिता शालिशूकाभराजिभिः ।" वा.उ.१४अ. । [वै.निघ. ।

**राजीलः** । पुं । राजसर्षपे । राइसरिषा ।

**राजीवम्** । क्ली । पद्मे । प.मु. । रा.नि.व.१०। तन्मूलं शूकरदंष्ट्रे स्थितम् । पुं । हरिणभेदे । हस्तिनि । त्रिका. । सारसपक्षिणि । अम. । नादेयमत्स्यविशेषे । मे. ।

**राजेन्द्रः** । पुं । राजगिराशाके । वै.निघ. ।

**राजेयः** । पुं । पटोले । भा.पू.१भ.शा.व. ।

**राजेष्टम्** । क्ली । नृपान्ने, राजान्ने । राजभोग हैमन्तिक धान्यविशेष । रा.नि.व.१६ । पुं । राजपलाण्डौ । रा.नि.व.७ । स्त्री (ष्टा) । कदलीवृक्षे । रा.नि.व.११ । पिण्डखर्ज्जूरे । वै.निघ. ।

**राजोद्दिजनसंज्ञकः** । पुं । चवके, भूताङ्कुशवृक्षे । চৈচেতা । रा.नि.व.६ ।

**राज्ञी** । स्त्री । नील्यां । नील गाछ । रा.नि.व.४ । कांस्ये । हे.च. । जातीपुष्पवृक्षे । पित्तले । राजसर्षपे । कालसरिषा, राइ । रा.नि.व.१६ ।

**राटः (ठः)** । पुं । मदनवृक्षे । मयना गाछ । रा.नि.व.८ र.सा.सं.उदावर्त्तलेपे । वा.उ.३७अ.।

**राटिः (ड़िः)** । पुं । शरारिपक्षिणि । शराल पाखी । अम. ।

**राठपुष्पम्** । क्ली । मदनपुष्पे । वा.उ.२अ. ।

**रात्रिः** । स्त्री । हरिद्रायां । रा.नि.व.६ । वै.निघ.२भ.ग्रहणी.चि. ।

**रात्रिकः** । पुं । उष्ट्रधूमकाख्ये उच्चिटिङ्गाख्ये वा वृश्चिकभेदे । "शिरीषपुष्पं सकरञ्जबीजं काश्मीरजं कुष्ठमनःशिलाश्च । एषोऽगदो रात्रिकवृश्चिकानां संक्रान्तिकारी कथितो जिनेन ॥" वा.उ.३७अ. ।

**रात्रिजलम्** । क्ली । कुज्झटिकायां । श.मा. ।

**रात्रिजागरः** । पुं । कुक्कुरे । हे.च. ।

**रात्रिजागरदः** । पुं । मशके । रा.नि.व.१९।

**रात्रिपुष्पम्** । क्ली । उत्पले । শুন্দিফুল, চেন্না ফুল । रा.नि.व.१० ।

**रात्रिपुष्पिका** । स्त्री । शुक्लजातीवृक्षे । শ্বেত জাতি গাছ । वै.निघ. । [निघ. ।

**रात्रिवियोगी (इन्)** । पुं । चक्रवाके । वै.

**रात्रिविश्लेषगामी (इन्)** । पुं । चक्रवाकपक्षिणि । रा.नि.व.१९ ।

**रात्रिवेदः (दी (इन्))** । पुं । कुक्कुटे । त्रिका.।

**रात्रिहासः** । पुं । श्वेतोत्पले । श.र. ।

**रात्र्यन्धः** । त्रि । तन्नामकदृष्टिरोगयुक्ते, काकादौ । রাতিকানা ।

**राद्धः** । त्रि । पक्वे । हे.च. । क्ली । वृद्ध्यन्तरमुक्ते, घृतान्तरभुक्ते वा । त्रिका. ।

**राधा** । स्त्री । विष्णुक्रान्तायां । आमलक्यां । मे.।

**राधामाधवः** । पुं । वैद्यरत्नावलीकारे ।

**रामम्** । क्ली । तमालपत्रे । তেজপত্র । रा.नि.व.६ । कुष्ठे । কুড় । रा.नि.व.१२ । वास्तुके । मे. । पुं । अशोकवृक्षे । पशौ । त्रिका. । घोटके । मे. ।

**रामकः** । पुं । अपामार्गे । वै.निघ. ।

**रामकन्दः** । पुं । शमीवृक्षे । प.मु. ।

**रामकर्पूरकः** । पुं । कर्पूरे । গন্ধতৃণ, রামকর্পূর । श.र. ।

**रामकाण्डः** । पुं । रामशरे । रा.नि.व.८ ।

**रामकोशा(षा)तकी** । स्त्री । महाराजकोशातक्याम् । वै.निघ. । [नामविकारे ।

**रामचन्द्रः** । पुं । रसप्र[illegible]कारे । रसेन्द्रचि-

**रामच्छर्द्दनकः** । पुं । मदनवृक्षे । भा. ।

**रामठम्** । क्ली । हिङ्गुनि । হিং । र.मा. । रा.नि.व.६ । मदनफले । च.द.वमनाधिकारे । पुं । अङ्कोटवृक्षे । र.मा. । अपामार्गे । वै.निघ. ।

**रामठी** । स्त्री । नाडीहिङ्गौ । रा.नि.व.६ ।

**रामणः** । पुं । पर्वतनिम्बवृक्षे, कैटर्य्यनिम्बे तिन्दुकवृक्षे । रा.नि.व.६ ।

**रामतरुणी** । स्त्री । तरुणीपुष्पवृक्षे । শেউতী ফুলের গাছ । रा.नि.व.१० ।

**रामदूतिका (ती)** । स्त्री । नागदमन्याम्

নাগদনা। र.मा.। नागपुष्पग्रां। भा.। तुलसी-विशेषे। श.च.।

**रामपूगः** । पुं। गुवाकवृक्षविशेषे। त्रिका.।

**रामभद्रा** । स्त्री। गाम्भारीवृक्षे। वै.निघ.।

**रामलवणम्** । क्ली। शाकम्भरिलवणे। শাকম্-ভরলবণ। र.मा.। [नि.व.६।

**रामवल्लभम्** । क्ली। त्वचि। গুড়ত্বক্। रा.

**रामवाणः** । पुं। रामशरे। रा.नि.व.८।

**रामवाणरसः** । पुं। अजीर्णाधिकारे रसः। पाठः—"पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितं। जातिकाफलमथार्द्धभागिकं तिन्तिड़ी-फलरसेन मर्दितं। माषमात्रमनुपानयोगतः सद्य एव जठराग्निदीपनः॥" পারা, বিষ, লবঙ্গ, গন্ধক প্রত্যেকে ১ তো. মরিচ ২ তো. জা-য়ফল ॥০ তো. কাঁচা তেঁতুলের রসে ভাবনা॥ বটী মাষমাত্রা। र.सा.सं.। रस.चि.भा.।

**रामशरः** । पुं। स्वनामख्यातशरतृणे, मुञ्जभेदे। रामशपु, सरगोल इति मालवदेशे प्रसिद्धः। রামশর। हिं रामशर, शरपत। भा.। गुणाः—रसे अम्लकषायः पित्तकृत् वातकफघ्नश्च। एतन्मूलं ईषदुष्णं रुचिदञ्च। रा.नि.व.८।

**रामशीतला** । स्त्री। आरामशीतलायां। পত্রশাকবিশেষ। रा.नि.व.१०।

**रामशे(से)नः (कः)** । पुं। भूनिम्बे। চি-রেতা। रा.नि.व.९। भा.म.१भ.चित्तभमज्व.चि.। "पथ्यादिवतरामसेनकरजः।" कट्फलवृक्षे। रा.नि.व.९। कपिकच्छुबीजे। वै.निघ.२भ.वा.व्या.चि.महारास्नादिः।

**रामा** । स्त्री। गदहकन्यायां। घृतकुमारी। रा.नि.व.६। हिङ्गुनि। मे.। हिङ्गुले। श.र.। अशोकवृक्षे। सातलायां। तमालपत्रे। त्रायमाणायां। रा.नि.व.२३। गोरोचनायां। रा.नि.व.१२। वासायां। गैरिके। श.च.। श्वेतकण्टकार्यां। रा.नि.व.४। आरामशीतलायां। रा.नि.व.१०।

**रामाटरूषः** । पुं। वासाभेदे। भैष.ज्व.चि.दार्व्यादौ। [लि। वै.निघ.।

**रामाप्रियः** । पुं। दारुचीनीति प्रसिद्धे वल्क-

**रामालिङ्गनकामः** । पुं। रक्ताम्लानपुष्पवृक्षे। রক্তঝাঁটী। रा.नि.व.१०। [नि.व.९।

**रामावर्चोजोपमः** । पुं। चक्रवाके। रा.

**रामावामाङ्घ्रिघातकः** । पुं। अशोकवृक्षे। रा.नि.व.१०।

**रामेषुः** । पुं। रामशरे। रा.नि.व.८।

**रामोदुम्बरिकाफलम्** । क्ली। अञ्जीरफले। वै.निघ.।

**रायणम्** । क्ली। पीड़ायाम्। श.र.।

**रालः** । पुं। (Mimosa rubicaulis.) सर्ज्जतरौ। ধূনোর গাছ। हिं किलि। तें सर्ज्जरसमु, सर्ज्ज। पञ्जा. राल अर्ल। रा.नि.व.९। सर्ज्जरसे। ধূনা। गुणाः—शीतलः स्निग्धः कषायः तिक्तः संग्राही वातपित्तघ्नः स्फोटकण्डूतिव्रणघ्नश्च। पानलेपनगुणो शीतलः प्रदरघ्नश्च। रा.नि.व.१२।

**रालकार्य्यः** । पुं। शालवृक्षे। रा.नि.व.९।

**रालिका** । स्त्री। धूनके। ধুনা। वै.निघ.२भ.प.सा.पथ्यापथ्ये।

**रावणः** । पुं। वृक्षविशेषे। वम्. टेंभुरणी। वै.निघ.। अर्कप्रकाशनामवैद्यकग्रन्थकारे।

**राशिः** । पुं। द्रोणपरिमिते माने। प.प्र.१ख.। फड़ी। ढ़ड़ी। मात्रायाम्। प.रि.१ख.।

**राषभी** । स्त्री। कपिकच्छ्वाम्। আলাকুশী। वै.निघ.। गर्द्दभ्यां। श.र.।

**राष्ट्रकम्** । क्ली। वैदूर्य्यमणौ। प.मु.।

**राष्ट्रिका** । स्त्री। कण्टकार्य्यां। प.मु.। बृहत्यां। रा.नि.व.४। र.मा.।

**राष्ट्री** । स्त्री। महाराष्ट्रीलतायां। কাঁচড়া। प.मु.। रा.नि.व.२३। [त्रिका.।

**रासः** । पुं। शृङ्खलके। গোল। क्रीड़ायां।

**रासना** । स्त्री। रास्नायां। वै.निघ.कास.चि.त्रिकटुकादिचूर्णे।

**रासभः** । पुं। गर्द्दभे। গাধা। अम.। (भी) स्त्री। गर्द्दभस्त्रियां। श.र.। [च.।

**रासभवान्दिनी** । स्त्री। मल्लिकापुष्पवृक्षे। श.

**रास्ना ।** स्त्री । (Vanda Roxburghii. Syn. Cymbidium tessaloides.) स्वनामख्याततद्रूपौषधी केदारदेशे प्रसिद्धे । रास्ना । हिं राखा । तें किरचिपल । अमरदामर । सा त्रिधा —"रास्ना तु त्रिविधा प्रोक्ता मूलपत्रतृणैस्तथा । श्रेयी मूलदली श्रेष्ठी तृणरास्ना च मध्यमा ॥" रा.नि.व.६ । सु.सू.३७अ.वर्कादिः । वा. सू.१५अ.निरूहणे वर्कादिः । "भार्गी रास्ना हृषिकाली प्रकार्य्या ।" च.द.ज्व.चि. । "रास्ना ह्यादनी दारु ।" वेतकण्टकार्य्या । रा.नि.व.४ ।

**रास्नागुग्गुलुः ।** पुं । वातव्याधौ औषधम् । पाठः —"रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलोः । सर्पिषा वटकं कृत्वा खादेद्धन्ति च गृध्रसीम् ॥" रस.र. । अन्यः कर्णरोगे—"रास्नाघृतैरण्डसुराह्वविश्वं तुल्यं पुरेणाथ विमर्द्य खादेत् ।" भा ।

**रास्नातैलम् ।** क्ली । वातव्याधौ तैलम् । पाठः —"रास्नाशिरीषयष्ट्याह्वशुण्ठीसहचरामृताः । स्योनाकदारुसम्पाका हयगन्धात्रिकण्टकाः । एषां दशपलान् भागान् कषायमुपकल्पयेत् । ततस्तेन कषायेण सर्व्वगन्धैश्च कार्षिकैः । दध्यारणालमाषाम्बुमूलकेक्षुरसैः शुभैः । पृथक् प्रस्थोन्मितैः सार्द्धं तैलप्रस्थं विपाचयेत् ।" च.चि.२८अ. ।

**रास्नादशमूलम् ।** क्ली । वातव्याध्यादौ कषाये । पाठः—"दशमूलामृतैरण्डरास्नानागरदारुभिः । क्वाथो रुवुकतैलेन सामं हन्त्यनिलं गुरुम् ।" रस.र. ।

**रास्नादिः ।** पुं । रास्नाह्वादनीदेवदारुसरलैलवालुककृतकषाये । स क्षौद्रशर्करायुक्तो वातज्वरे हितः । चद.ज्व.चि. । "रास्नाह्वादनीदारुसरलं लैलवालुकम् । कषायः शर्कराक्षौद्रयुक्तो वातज्वरापहः ।" प्रयोगा.वात.ज्व.चि. । ह्वादनी वन्दाकः (मान्दरा) ।

**रास्नादिलौहम् ।** क्ली । राजयक्ष्माधिकारे, श्वासकासे च लौहम् । पाठः—"रास्नाश्वगन्धाकर्पूरमेकपर्णीशिलाह्वयैः । त्रिकत्रयसमायुक्तैर्लौहं यक्ष्मान्तकं मतम् ॥" र.सा.सं. । (रास्नातालीशकर्पूर) इति रसको.पाठभेदः ।

**रास्नाद्यं (घृतं तैलञ्च) ।** क्ली । यक्ष्माधिकारे । पाठः—"रास्नाश्वगन्धाकपिकच्छुभूमिकुष्माण्डीकण्टकशालपर्णी— छिन्नारुहैरण्डबलाशताह्वापुनर्नवानां विधिनोद्धृतानां । प्रत्येकशः पञ्चपलं गृहीत्वा पचेद्घटेऽपां घृतपादशेषे । शतावरीरसं पूतं दत्त्वाच पलषोडशं । घृतप्रस्थं विपक्तव्यं तैलमेरण्डमेव वा" दत्त्वाष्टवर्गकल्कञ्च गुग्गुलोर्वा पलाष्टकं । सिद्धं घृतञ्च तैलं वा दद्याद् वातगदातुरे ……।" रस.र. ।

**रास्नापञ्चकः ।** पुं । ऊरुस्तम्भाधिकारे कषायः । पाठः—"रास्नां गुडूचीमेरण्डं देवदारु सनौषधम् । पिबेत् सर्व्वाङ्गके वाते सामे सन्ध्यस्थिमज्जगे ।" अत्र मेदार्थमेरण्डतैलं प्रक्षिपन्ति वृद्धाः । रस.र. ।

**रास्नासप्तकम् ।** क्ली । ऊरुस्तम्भाधिकारे पाचनम् । पाठः—"रास्नामृतारग्वधदेवदारुत्रिकण्टकैरण्डपुनर्नवानां । क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥" रस.र. ।

**रास्निका ।** स्त्री । रास्नायाम् । भा.षड्विन्दुतैले । "रास्निकामेन्धवञ्च ।" [illegible]

**राह्निकः ।** पुं । निर्विषसर्पविशेषे । सु.कल्प

**राहुच्छत्रम् ।** क्ली । आर्द्रके । आदा । रा नि.व.६ ।

**राहुरत्नम् ।** क्ली । गोमेदके रत्ने । रा.नि.व.१

**राहुच्छिष्टः ।** पुं । लशुने । लशुन । त्रिका

**राहुसृष्टः ।** पुं [illegible]ने । धारा. ।

**राक्षम् ।** क्ली पर्कटीफले । अम. ।

**राक्षसः ।** पुं । रोहीतकवृक्षे । रोहड़ा । वै.नि

**राक्षसभोजनम् ।** क्ली । मांसे । राक्षस वा.उ. ।

**राक्षसी ।** स्त्री । चण्डायां । चोरनामगन्धद्रव्ये । मुरामांस्याम् । रस.र.प्रमेह.चि. । दंष्ट्रायाम् हे.च. ।

**राक्षसीकन्दः ।** पुं । चण्डालकन्दे । वै.नि

**राचा ।** स्त्री । लाक्षायाम् । ला । अम. ।

**रिङ्ग(ङ्ख)णम् ।** क्ली । स्खलने । अम. ।

**रिङ्ग(ङ्खि)णी ।** स्त्री । मुद्गपर्णीलतायाम् गानौ । रा.नि.व.३ । कैवर्त्तमुस्तायां । कैव

। कण्टकार्य्याम् । वै.निघ.श्वास.चि.वासादि-
चाये ।

ठा (करञ्ज:) । स्त्री, पुं । रीठाकरञ्जे ।
ठा गाछ । कौं रिठ्ठी । गुर्ज्ज.अरिठा । वै.निघ.।

:पु: । पुं । चोरनामगन्धद्रव्ये । गेँटेला । रा.
न.व.१२ । शारीररिपुषट्के । [वाह । श.च. ।

पुघातिनी । स्त्री । गुल्माविशेषे । हिं कु-

वु: । पुं । रक्तैरण्डे । वै.निघ. ।

मेद: । पुं । अरिमेदे । थदिरविशेष । रा.
न.व.८ ।

री । स्त्री । पिप्पली । हे.च. । [श.र. ।

श्य: (ष्य:) । पुं । हरिणविशेषे । चिका. ।

ष्ट: । पुं । रीठाकरञ्जे । रिठा । रक्तशिग्रुवृक्षे ।
ने. । श्वेतरसोने । रा.नि.व.७ । [श. ।

ष्टक: । पुं । रक्तशिग्रुवृक्षे । श.र. । अत्रि.२

खा । स्त्री । निषायां । भूकायां । निकि ।
हं.च. ।

ीठा (करञ्ज:) । स्त्री, पुं । (Sapindus mukorossi or S. Trifoliatus. Syn. S. Detergens or S. Emerginta.) The soapnut tree. स्वनामख्यातोत्तरदेशीयकरञ्ज-
वृक्षे । बड़ रिठा । हिं रीठा । तें रीठाकरञ्ज-
मनचेट्टु । कुकुड़कायलु । बम्. रिथा । ता. पो-
ञान कोट्टइ । गुणा:—तिक्त उष्ण: कटु: स्निग्ध:
वातघ्न: कफघ्न: कुष्ठकण्डूघ्न: विषविस्फोटघ्नश्च ।
See अरिष्टक । [हे.च. ।

रीढ़क: । पुं । पृष्ठास्थनि । पीठेर डाँड़ा ।

रीति: (ती) । स्त्री । पित्तली । रा.नि.व.१३ ।
लौहकिट्टे । मण्डूर । मे. । दग्धस्वर्णादिमले ।
धरणि: । [१३ ।

रीतिक(ज)म् । क्ली । पुष्पाञ्जने । रा.नि.व.

रीतिका । स्त्री । पित्तली । पुष्पाञ्जने । श.च. ।

रीतिकुसुम(पुष्प)म् । क्ली । पुष्पाञ्जने । रा.
नि.व.१० ।

रीतिहेतु: । पुं । ययदे । दण्डा । भा. ।

रुक् । स्त्री । कुष्ठौषधौ । कुड़ । मे. भा.म.१भ.

तन्द्रिज्ञ.चि. । "मरिचकणपचन्यचावचारुक् ।"
व्याधौ । रा.नि.व.२० । [च ।" प.प्र.२ख. ।

रुक्का । स्त्री । सुराविशेषे । "रुक्का सा स्मृतसारा

रुक्प्रतिक्रिया । स्त्री । रोगोपशमनोपाये,
चिकित्सायाम् । रा.नि.व.२० ।

रुक्मम् । क्ली । तीक्ष्णलौहे । विदरीति लोके ।
र.मा. । धुस्तूरे । प.मु. । सुवर्णे । रा.नि.व.१३ ।
पुं । नागकेशरवृक्षे । रा.नि.व.६ ।

रुक्मलौहम् । क्ली । तीक्ष्णलौहे । विद्री ।
सि.यो.र. पि.चि.खण्डखाद्यलौहे । "पलद्वादशकं
ज्ञेयं रुक्मलौहस्य चूर्णितम् ।"

रुक्मवल्ली । स्त्री । शालिधान्यविशेषे । हैम-
न्तिक धान्यभेद । गुणा:—"रुक्मवल्ली लघुर्बल्य-
बलपुष्टिकरा मता ।" अत्रि.१६अ. ।

रुक्मिणी । स्त्री । स्वर्णक्षीरिण्यां । शेयाल-
काँटा । रा.नि.व.५ ।

रुक्मश्च (न) । क्ली । मले । कश्चित् ।

रुग्ण: । त्रि । रोगिणि । रा.नि.व.२० ।

रुग्दाह: । पुं । तन्नामकसन्निपातज्वरविशेषे ।
लक्षणम्—"प्रलापपरितापनप्रबलमोहमान्द्यश्रम:,
प्रसभमणवेदनाव्यथितकण्ठमन्याहनु: । निरन्तर-
तृषाकर: श्वसनकासहिक्काकुल: सकष्टतरसाधनो
भवति हन्ति रुग्दाहक: ॥" वै निघ. । भा. ।

रुच(क)म् । क्ली । सर्ज्जिक्षारे । साजिमाटी ।
सौवर्चललवणे । सचललवण । मे. । भा.पू.२भ.
अर्शश्चि.विड़ङ्गादिचूर्णे । वै.निघ.ग्रहणीचि.रुच
कादिचूर्णे । मूलके । मूला । गोरोचनायां । वि
ड़ङ्गे । हे.च. । लवणे । हारा. ।

रुचक: । पुं । बीजपूरवृक्षे । मातुलुङ्गवृक्षे ।
रा.नि.व.११ । श्वेतैरण्डे । ज.द.१२अ. । सर्षपे ।
दन्ते । कपोते । मे. ।

रुचि: (ची) । स्त्री । स्पृहायाम् । अम.भ. ।
लङ्घनेनामपाकात् सुखशोषादिनाशे सुखस्य प्रकाश-
ले च । लोभा । गोरोचनायाम् । रा.नि.व.१२ ।
सुधायाम् । हे.च. । [वै.निघ. ।

रुचिकर: । पुं । नागरङ्गवृक्षे । नारङ्ग लेबु ।

रुचित: । त्रि । मिष्टवस्तुनि । उणा. ।

**रुचिप्रदा** । स्त्री। मधुरबिम्ब्याम्। कुन्दरुकी।
वै.निघ.। [भा.।

**रुचिफलम्** । क्ली। अमृतफले। नाशपाति।

**रुचिरम्** । क्ली। मूलके। मुला। रा.नि.व.७।
कुङ्कुमे। लवङ्गे। रा.नि.व.१२। रौप्ये। रा.नि.
व.१३। पुं। शियुवृक्षे। सजिना गाछ। त्रि।
मधुरे। स्त्री। गोरोचनायाम्। रा.नि.व.१२।
पालकाप्य(व्य)नामगजवैद्यककारजनन्याम्।

**रुचिरफला** । स्त्री। कुन्दुरौ। वै.निघ.।

**रुचिराञ्जनः** । पुं। शोभाञ्जनवृक्षे। रा.नि.
व.७। [द्यकका(र)। त्रिका.।

**रुचिरासुतः** । पुं। पालकाप्य(व्य)नामगजवै-

**रुचिष्यम्** । क्ली। पियालबीजे। सौवर्चललव-
णे। जीरकभेदे। वै.निघ. त्रि। मधुरे उणा.।

**रुच्यम्** । क्ली। सौवर्चललवणे। सचल लवण।
रा.नि.व.६। पुं। कतकवृक्षे। निर्म्मला गाछ।
रा.नि.व.११। शालिधान्यभेदे। रा.नि.व.१६।

**रुच्यकन्दः** । पुं। शूरणे। ओल। रा.नि.व.७।
जीरके। शालिधान्ये। वै.निघ.।

**रुच्या** । स्त्री। नालितायाम्। नालितापाता।
प.मु.। कृष्णजीरके। रा.नि.व.६।

**रुजा** । स्त्री। मेथिकायां। मेति। हे.च.।
कुष्ठे। कुड़। रा.नि.व.१२। व्याधौ। रा.नि.व.
२०। भङ्गे। मे.।

**रुजाकरम्** । क्ली। कर्म्मरङ्गफले। श.च.। पुं।
हिन्तालवृक्षे। हेंताल गाछ। वा.सू.१५अ वक-
षादिः। "बहुलपल्लवदर्भरुजाकरः।" रोगे।
हे.च.।

**रुजाप(स)हः** । पुं। धन्वनवृक्षे। धामना
गाछ। रा.नि.व.९। [चाउल। रा.नि.व.१६।

**रुणशालिः** । पुं। रक्तशालौ। दादथानि

**रुणालिः** । पुं। रक्तशालौ। दादथानि। रा.
नि.व.१६।

**रुण्डकम्** । क्ली। अगुरुकाष्ठे। वै.निघ.।

**रुण्डी** । स्त्री। कुन्दुरौ। कुँदरुकि। रा.नि.व.८।

**रुदथः** । पुं। कुक्कुरे उणा.।

**रुदन्तिका (न्ती)** । स्त्री। स्वनामख्यातक्षुपे। रुदन्तीति उत्कलादौ प्रसिद्धा। सं
अनुगमि, रुदन्ती। लक्षणं—"चणपत्रसमं पत्रं
क्षुपश्चैव तथाविधः। शिशिरे जलबिन्दून्स्रवतीति
रुदन्तिका॥" गुणाः—कटुतिक्तोष्णा कफघ्नी कृ-
मिघ्नी रक्तपित्तघ्नी मेहघ्नी जराव्याधिहरत्वात् र-
सायनी च। रा.नि.व.५।

**रुद्धगुदः** । पुं। निरुद्धगुदनामक्षुद्ररोगभेदे। ल-
क्षणम्—"वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः।
अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत्। कृ-
च्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः।" वा
उ.३१अ.।

**रुद्रः** । पुं। महादेवे। आदित्यपत्रवृक्षे। आक
न्द गाछ। रा.नि.व.४।

**रुद्रकः** । पुं। महावकवृक्षे। वै.निघ.।

**रुद्रजः** । पुं। पारदे। रा.नि.व.१३।

**रुद्रजटा** । स्त्री। लताविशेषे,ईश्वरीलतायाम्
जटाधारी। जटालता। भा.म.१भ.सन्ततादि-ज्व
चि.माहेश्वरधूपे। "रुद्रजटा गोश्रृङ्गं।" गुणाः-
कटुरसा श्वासकासहृद्रोगहरी भूतविद्रावणी रक्त
पित्तहरणी च। रा.नि.व.३। मधुरिकायां
मौरी। अ.टी.भ.। [वदारु। वै.निघ

**रुद्रदारुः** । पुं। तैलदेवदारौ। मलेच्छो

**रुद्रनिर्माल्यम्** । क्ली। शिवनिर्माल्ये, पुष्पा
भा.म.१भ.सन्ततादि-ज्व.चि माहेश्वरधूपे। "
त्वक् रुद्रनिर्माल्यम्।" [र.मा

**रुद्रपत्नी** । स्त्री। अतसीक्षुपे। मसिना गा

**रुद्रपर्पटी** । स्त्री। कासाधिकारे औषध
पाठः—"शुद्धसूतं द्विधा गन्धं द्रवैः पुनः पुनः
त्। वातारिरार्द्रकं भृङ्गी काकमाची विकर्णि
दिनैकं मर्दयेत् खल्ले पाचयेत् पर्पटी यथा।
पादं मृतं ताम्रं छुप्ता बदग्निना पचेत्। र
भवेद्यावत् तावद्द्वाभ्यां प्रक्षालयेत्। प्रक्षिपेत्
लौपत्रेऽथवा स्निग्धपुटे पुनः। आच्छाद्य तेन
गेन तस्योर्द्ध्व गोमयं। देयं विचूर्णयेत्
चूर्णपादं विषं क्षिपेत्......॥" माला २८।
र.। पाठोऽयं न लगति।

**रुद्रप्रियः** । पुं। वकुलवृक्षे। रा.नि.व.८

रुक्ते चटमग्रतके ।" स्त्री (या । हरीतक्याम् ।
.र. ।
रुभट्टः । पुं । वैद्यजीवनग्रन्थकारे । सन्निपात
लिकाकारे । [चि. ।
रुमाल्यः । पुं । विल्ववृक्षे । वै.निघ.२भ.ज्व.
रुरेताः (तस्) । पुं । पारदे । वै.निघ. ।
रुलता । स्त्री । रुद्रजटायां । जटाधारी ।
.नि.व.३ ।
रा । स्त्री । रुद्रजटायां । जटाधारी । रा.नि.
३ । नलिकानामगन्धद्रव्ये । रा.नि.व.१२ ।
राणी । स्त्री । रुद्रजटायां । रा.नि.व.३ ।
राक्षः । पुं । स्वनामख्यातवृक्षे । रुद्राक्ष
छ । क्ली । तत्फले । गुणाः—अम्लमुष्णं वातघ्नं
फनाशनं शिरोवेदनाशमनं रुच्यं भूतग्रहविनाश-
च । रा.नि.व.११ ।
धिरम् । क्ली । कुङ्कुमे । रा.नि.व.१२ । च.सू.
भ. । रक्तधातौ । रक्त । रा.नि.व.१८ । रस.
.भैष.वातरक्तचि.द्वादशायसि । गैरिके । गि-
माटी । रा.नि.व.१३ । [पुराणम् ।
धिराख्यम् । क्ली । इन्द्रनीलतुल्यमणिभेदे ।
पिका । स्त्री । आदित्यपुष्पिकायां । आकन्द
मा. । अरुणार्कक्षुपे । रक्त आकन्द । प.मु. ।
तार्के । भैष.नाड़ीव्रणचि. । सु.चि.१७अ. ।
मा । स्त्री । तन्नामक्षारसमुद्रे । मे. ।
माभवम् । क्ली । रुमानदीभवलवणे, शाम्भर-
वणे । वै.निघ. ।

रुः । पुं । कृष्णसारमृगविशेषे । मांसगुणाः—
रु स्निग्धं आग्निमान्द्यनाशनञ्च । रा.नि.व.१७ ।
रुमांसं सुमधुरं कषायानुरसं स्मृतम् । वातपि-
पशमनं गुरु शुक्रमवर्द्धनम् ।'' सु.सू.४६अ. ।
नरोहीतके । वै.निघ. ।
रुमाणः । पुं । वरुणवृक्षे । वै.निघ. ।
रुः (बूः) । पुं । एरण्डवृक्षे । प.मु. । रक्तैर-
। रा.नि.व.८ । च.द.वा.व्या.चि,रसोनपिण्डे ।
रु(बू)कः । पुं । एरण्डवृक्षे । प.मु. । रक्तैर-
। रा.नि.व.८ । च.द.वा.व्या.चि,माष बलादिः ।

रुबुकः । पुं । एरण्डवृक्षे । र.मा. । [कृमिचि. ।
रुबुबीजम् । क्ली । एरण्डबीजे । भैष.वातर-
रुष्करः । पुं । भल्लातकवृक्षे । ভেলা গাছ ।
वै.निघ ।
रुहकम् । क्ली । छिद्रे । श.च. ।
रुहद्दर्भः । पुं । हरितकुशे । रा.नि.व.८ ।
रुहा । स्त्री । दूर्व्वायां । र.मा. । च.चि.३अ. ।
मांसरोहिण्यां । नकुल.१८अ. । महासमङ्गायां ।
लज्जालुकायाम् । रा.नि.व.५ । [द्रव्ये । उषा. ।
रुक्षः । पुं । धामनवृक्षे । वै.निघ. । त्रि । शुष्क-
रुक्षदधि । क्ली । निःस्नेहदधनि । वै.निघ. ।
रुक्षपत्रः । पुं । शाखोटवृक्षे । रा.नि.व.९ ।
रुढ़कम् । क्ली । पिप्पलीमूले । वै.निघ. ।
रुढ़मल्लिका । स्त्री । अङ्कोलवृक्षे । আঁকোড়
গাছ । वै.निघ. ।
रूपम् । क्ली । लक्षणे । व्यक्तीभूतपूर्व्वरूपे । "त-
देव व्यक्ततां यातं रूपमित्यभिधीयते ।'' मा.नि. ।
रूपकम् । क्ली । रौप्यधातौ । रा.नि.व.१३ ।
रूपनाशनः । पुं । पेचके । श.र. ।
रूपशङ्खः (शिखः) । पुं । वह्नौ । वै.निघ. ।
रूपि(पि)का । स्त्री । महार्कवृक्षे । বড় আ-
কন্দ । र.मा. । सु.सू.४३अ. । वा.उ.२८अ. ।
श्वेतार्के । चि.१७अ. । रस.र.च.द. । श्लीपद.चि. ।
रूप्यमलम् । क्ली । रौप्यमाक्षिके । च. ।
रूप्यमाक्षिकम् । क्ली । तारमाक्षिके । রৌ-
প্যমাক্ষিক । प.मु. ।
रूप्योद्भवम् । क्ली । रौप्यमाक्षिके । वै.निघ. ।
रूमीमुस्तकी । स्त्री । (Pistacia lentiscus.) Mastic tree. स्वनामख्यातवृक्षविशेषे,
गुह्यावदरीवृक्षे । গুহাবদরী । हिं रूमिमुस्तकी ।
भैष. । वाजी.चि. ।
रूबुकः । पुं । एरण्डवृक्षे । श.मा. ।
रूषकः । पुं । वासावृक्षे । বাসক গাছ । जटा.
रूषणम् । क्ली । रजोगुणे । रा.नि.व.२१ ।
रूपिका । स्त्री । अर्कवृक्षे । च. ।

**रूक्ष:** । पुं । धन्वनवृक्षे । ধামনা গাছ । रा.नि.व.९ । प्रियङ्गुनामतृणधान्ये । रा.नि.व.१६ । वृक्षे । वै.च. ।

**रूक्षगन्ध: (क:)** । गुग्गुली । रा.नि.व.१२ । स्त्री (न्धा) । सर्पगन्धायां । গন্ধরাস্না । प.मु. ।

**रूक्षगुणकर्म** । क्ली । अस्नेहमार्दवकरत्वे बलवर्णघ्नत्वे च । सु. ।

**रूक्षणात्मिका** । स्त्री । क्षुद्रचणकवृक्षे । কাল ছোলা । लङ्कानामशिम्बीधान्ये । তেওড় । रा.नि.व.१६ । [रा.नि.व.८.

**रूक्षदर्भ:** । पुं । हरिदर्भे, शरपत्रदर्भे वा ।

**रूक्षपत्र:** । पुं । शाखोटवृक्षे । रा.नि.व.९ ।

**रूक्षप्रिय:** । पुं । ऋषभौषधे । ঋষভক । रा.नि.व.५ ।

**रूक्षस्वादुफल:** । पुं । धन्वनवृक्षे । रा.नि.व.९

**रूक्षा** । स्त्री । दन्तिवृक्षे । रा.नि.व.६ ।

**रेक:** । पुं । विरेचने । मे. । भा.आमादिव. । भेके । त्रिका. ।

**रेकण:** । पुं । स्वर्णे । उणा. ।

**रेचकम्** । क्ली । कङ्गुष्ठ, मृत्तिकाविशेषे । रा.नि.व.१३ । पुं । जैपालवृक्षे । प.मु. । यवक्षारे । त्रिका. । तिलकवृक्षे । তিলগাছ । रा.नि.व.१० ।

**रेचन:** । पुं । स्थूलारग्वधवृक्षे । বড় শোণালু গাছ । रा.नि.व.९ । तन्नामकधूमपानभेदे । भा. । त्रि । विरेचकद्रव्ये । क्ली । मलभेदने । र.मा. ।

**रेचनक:** । पुं । कम्पिल्लके । रा.नि.व.१३ ।

**रेचना (नी)** । स्त्री । काम्पिल्लके । কমলাগুঁড়ি । श.र. । रा.नि.व.१३ । कालाञ्जन्यां । रा.नि.व.४ । दन्तिवृक्षे । रा.नि.व.६ । शुक्लत्रिवृति । শ্বেত তেউড়ী । मे. । तिलकपुष्पे । वै.निघ. ।

**रेचनीय:** । त्रि । विरेचके ।

**रेची** । स्त्री । कम्पिल्लके । কমলাগুঁড়ী । रा.नि.व.१३ । अङ्कोलवृक्षे । আকোড় গাছ । रा.नि.व.९ ।

**रेणु: (क:)** । पुं । पर्पटके । ক্ষেৎপাপড়া । रा.नि.व.५ । भा.यक्ष्म-चि,द्राक्षासवे । रेणुकायां । রেণুক গাছ । रा.नि.व.६ । सु.चि.२०अ. । चि.क.क.१ । सवका.३प. । तज्जाति:—"रेणुको मुद्गतुल्यो यो भद्र: स सम्मत: सतां । स्थूलो मरिचसङ्काश: गन्धकर्मणि गर्हित: । आनूपदेशसम्भूत: सुहृवर्णातिशोभन: । मिश्रिते मध्यम: प्रोक्तो जाङ्गलस्तधमो मत: ॥" भैष. ।

**रेणुकम्** । क्ली तन्नामकफलविषभेदे । सु.कल्प.२अ. । रेणुकबीजे । च.द.यक्ष्म.चि.चन्दनादितैले ।

**रेणुकदम्बक:** । पुं । धूलीकदम्बे । रा.नि.व.९ ।

**रेणुका** । स्त्री । (Hydnocarpus wightianum. or Piper aurantiacum. Syn. II. Inebrians.) मरिचाकृतिसुगन्धद्रव्ये । রেণুক । प.मु. । हिं सम्भालुकाबीज । बम्. वेणुकबीज, कौन्ती । ता. येंट्टी । गुणा:—कटुः शीता कण्डूतिघ्नी तृष्णादाहविषघ्नी मुखवैमल्यकरी च । रा.नि.व.६ ।

**रेणुरूषित:** । पुं । गर्द्दभे । त्रिका. ।

**रेणुवास:** । पुं । भ्रमरे । त्रिका. । [श.र. ।

**रेणुसार: (क:)** । पुं । कर्पूरे । त्रिका. ।

**रेत:** । क्ली । पारदे । मे. । शुक्रधातौ । रा.नि.व.१८ ।

**रेतजा** । स्त्री । बालुकायाम् । বালি । भा. ।

**रेतनम्** । क्ली । शुक्रे । श.च. ।

**रेतोदोष:** । पुं । शुक्रदोषे ।

**रेत्यम्** । क्ली । पित्तले । च । नीलकण्ठ: ।

**रेत्रम्** । क्ली । शुक्रे । प.२८ । मे. ।

**रेवटम्** । क्ली । दक्षिणावर्त्तशङ्खे । शिग्रुतैले कदलीफले । अजयपाल: । पुं । शूकरे । वातुले विषवैद्ये । अजयपाल: । रामपूगे । त्रिका. ।

**रेवत:** । पुं । जम्बीरवृक्षे । জামীর । जटा. आरग्वधवृक्षे । श.र. । (क:) द्वीपान्तरखर्ज्जूरे । रा.नि.व.११ ।

**रेवतिका (ती)** । स्त्री । वटपत्रपाषाणभेदे बड़ পাথরকুচি । वै.निघ. । रावण.८मशतक बालरोगभेदे । लक्षणं यथा—"रक्ताक्षो हरितलोऽतिपाण्डुदेह: श्यावो वा ज्वरमुखपाकवेदनार्त्त: । रेवत्या व्यथिततनुश्च कर्णनासं मृद्नाति ।

मभिपीड़ित: कुमार: ॥" सु.उ.२७अ.। तन्नाम-नक्षत्रे । मे. ।

**रेवतीभव:** । पुं । शनैश्चरग्रहे । हे.च. ।

**रैवत:** । पुं । सोमलताभेदे । सु.चि.२९अ. । See सोम: । आरग्वधवृक्षे । मे. । क्ली । शोपा लारखर्जूरिकायाम् । रा.नि.व.११ ।

**रोकम्** । क्ली । छिद्रे । अन. ।

**रोग:** । पुं । अलक्तके । আলতা । रा.नि.व.६। कुष्ठौषधे । कुड़ । मे. । व्याधौ । रा.नि.व.२० ।

**रोगकाष्ठम्** । क्ली । पत्राङ्गचन्दने । বকম কাঠ । रा.नि.व.१२ । [रोगहरे ।

**रोगघ्न(ह)म्** । क्ली । औषधे । श.च. । त्रि ।

**रोगघ्न:** । पुं । वैद्ये । रा.नि.व.२० ।

**रोगपति:** । पुं । ज्वरे । वै.निघ. ।

**रोगप्रे(श्रे)ष्ठ:** । पुं । ज्वरे । रा.नि.व.२० ।

**रोगभू** । स्त्री । शरीरे । श.च. ।

**रोगमार्ग:** । पुं । शाखादिरोगवर्त्मनि । स त्रिविध: शाखा:, मर्म्मास्थिसन्धय:, कोष्ठश्चेति । तत्र शाखा रक्तादिधातवस्त्वक् च बाह्यरोगमार्गा:। मर्म्मास्थिसन्धिस्थानानि मध्यमरोगमार्गा: । कोष्ठा आभ्यन्तररोगमार्गा: । च.सू.११अ. ।

**रोगमुरारि:** । पुं । नवज्वरे रस: । पाठ:— "रसबलिफणिलौहव्योषताम्राणि तुल्यान्यथ रसदलभागो नाग एष प्रदिष्ट: । भवति गदमुरारिश्चास्य गुञ्जार्द्रवारा......... ॥" পারা, গন্ধক, বিষ, লৌহ, ত্রিকটু, তামা প্রত্যেকে সমভাগ ; সীস অর্দ্ধভাগ। বটী ২ রতি। অনুপান আদার রস। रस.कौ. । [रा.नि.व.२०।

**रोगराज:** । पुं । राजयक्ष्मणि । যক্ষ্মা রোগ

**रोगलक्षणम्** । क्ली । रोगव्यञ्जकचिह्ने । रा. नि.व.२० ।

**रोगविज्ञानम्** । क्ली । येन येन रोगाणां ज्ञानं भवति । तच्च त्रिविधं—"दर्शनस्पर्शनप्रश्नैर्व्याधीनां त्रिधा मतम् । दर्शनान्मूत्रजिह्वाद्यै: स्पर्शनान्नाड़िकादिभि: । प्रश्नैर्दूतादिवचनादिति वैद्या समुच्यते ॥" भैष. । [वायकयन्त्रे ।

**रोगविनिश्चय:** । पुं । माधवकृते चिकित्सि

**रोगशान्तक:** । पुं । चिकित्सके । श.च. ।

**रोगशिला** । स्त्री । मन:शिलायाम् । মনছাল । रा.नि.व.१३ । [শোণালুগাছ । जटा. ।

**रोगशिल्पी (इन्)** । पुं । स्वर्णलीवृक्षे ।

**रोगहरद्रव्यम्** । क्ली । मधुरादिरोगनाशकद्रव्ये । (गनाननाशन सद्रव्य) । धन्वन्तरि: ।

**रोगहारी (इन्)** । पुं । वैद्ये । रा.नि.व.१० ।

**रोगहेतु:** । पुं । रोगनिदाने । रा.नि.व.२० ।

**रोगाधीश:** । पुं । राजयक्ष्मणि । रा.नि.व.२०

**रोगासन:** । पुं । ज्वरे । वै.निघ. ।

**रोगाह्वयम्** । क्ली । कुष्ठौषधे । कुड़ । वै.निघ.।

**रोगितरु:** पुं । अशोकवृक्षे । रा.नि.व.१० ।

**रोगिवल्लभम्** । क्ली । औषधप्रलेपादौ । श.च.।

**रोगी (इन्)** । त्रि । रोगयुक्ते । अम. । रोगिपरीक्षा—"दर्शनस्पर्शनप्रश्नै: परीक्षेत च रोगिणम् । आयुरादि दृशा स्पर्शाच्छीतादि: प्रश्नतोऽपरम् ॥" वा. । नेत्रजिह्वामूत्रादिपरीक्षा: स्वस्वशब्दे मृग्या: ।

**रोगोदकम्** । क्ली । मलिनदुर्गन्धादियुक्ते रोगजनकजले । See जलम् । [श.च. ।

**रोग्यम्** । क्ली । रोगहिते । रोगयोग्ये । अपथ्ये ।

**रोचक:** । पुं । राजपलाण्डौ । ছোট পেয়াজ । रा.नि.व.७ । मातुलुङ्गवृक्षे । क्षुधायाम् । हे.च. । कदल्याम् । श.र. । ग्रन्थिपर्णविशेषे । भटेउर इति नेपाले । भा. । त्रि । रुचिकारकद्रव्ये ।

**रोचकद्वयम्** । क्ली । लवणद्वये, विट्सैन्धवे । वै.निघ.ज्व,चि.चन्दनबलातैले ।

**रोचन:** । पुं । पलाण्डौ । श्वेतशिग्रौ । শ্বেত সজিনা । रा.नि.व.७ । करञ्जवृक्षे । করঞ্জ গাছ । अङ्कोठवृक्षे । আঁকোড় গাছ । रा.नि.व.९ । दाड़िमवृक्षे । रा.नि.व.११,१२ । निम्बवृक्षे । जम्बीरवृक्षे । मातुलुङ्गे । रा.नि.व.२२ । व्यञ्जने । रा.नि.व.२० । कूटशाल्मलीवृक्षे । अम. । आरग्वधवृक्षे । শোনাল গাছ । रा.नि.व.११ । स्त्री । गोरोचनायाम् । भा. । वंशरोचनायाम् । सु.चि. कदरचि. क्षमाकलीवृक्षे । रक्तकह्लारे । मे. ।

**रोचनकः** । पुं । जम्बीरवृक्षे । रा.नि.व.११ ।

**रोचनफलः** । पुं । मातुलुङ्गवृक्षे । बीजपूरे रा.नि.व.११ । स्त्री (ला) । चिर्भटिकायाम् । कुटौ । रा.नि.व.७ ।

**रोचनिका** । स्त्री । वंशलीचनायाम् । रा.नि.व.६ । गुरुरोचनायाम् । कमलागुँड़ि । हारा. ।

**रोचनी** । स्त्री । दन्तिवृक्षे । रा.नि व.६ । आमलकीवृक्षे । रा.नि.व.११ । गोरोचनायाम् । रा.नि.व.१२ । श्वेतत्रिवृति । गुरुरोचन्याम् । अम. । मनःशिलायाम् । वै.च. । चुक्रायाम् । चुकापालंग । भा.पू.१भ.शा.व. । [याम् । हिङ्गे । श.र. ।

**रोची** । स्त्री । पत्रशाकविशेषे, हिलमोचिका

**रोटिका** । स्त्री । गोधूममाषादिकृतपिष्टकविशेषे । रुटी । तत्साधनविधिः—"शुष्कगोधूमचूर्णेन किञ्चित्पुष्टाच पोलिकां । तप्तके स्वेदयेत्कृत्वा भूयोऽङ्गारेऽपि तां पचेत् । सिद्धैषा रोटिका प्रोक्ता गुणानस्याः प्रचक्ष्महे ॥ रोटिका बलकृद्रुच्या बृंहणी धातुवर्द्धनी । वातघ्नी कफकृद्गुर्वी दीप्ताग्नीनां प्रपूजिता ॥" भा. ।

**रोदनम्** । क्ली । बालरोगे । क्रन्दने । मे. ।

**रोदनिका (नी)** । स्त्री । यासवृषे । दुरालभा । रा.नि.व.४ । अम. । [कोषान्तरम् ।

**रोदिका** । स्त्री । लज्जालुकायां । लज्जावती ।

**रोदिनी** । स्त्री । रक्तदुरालभायाम् । वै.निघ. ।

**रोधनम्** । क्ली । वायुजन्यव्रणवेदनायाम् । सु.सू.२२अ. । [निघ. ।

**रोधिनी** । स्त्री । लज्जालौ । लज्जावती । वै.

**रोध्र(क)म्** । क्ली । लोध्रकाष्ठे । लोधकाठे । वा.सू.१५अ. अम्बष्ठादिव. । "रोध्रं धातकिबिल्वपेशि" । पुं । लोध्रवृक्षे । लोध गाछ । प.मु. । वा.सू.१५अ.रोध्रादिः । 'रोध्रशावररोध्रपलाशाः ।'

**रोध्रपुष्पः (कः)** । पुं । तन्नामकशालिधान्यभेदे । गुणाः शालिवत् । सु.सू.४६अ. । मत्स्यलिसर्पविशेषे । सु.कल्प४अ. । मधूकवृक्षे । रा.नि.व.११ । [६ ।

**रोध्रपुष्पिणी** । स्त्री । धातकीवृक्षे । रा.नि.व.

**रोध्रयुग्मम्** । क्ली लोध्रद्वये । एकः शावरः, अन्यः पट्टिकारोध्रश्च । वा.सू.१५अ. । "न्यग्रोधपिप्पलसदाफलरोध्रयुग्मम् ।" [वा.सू.६अ. ।

**रोध्रशूकः** । पुं । रोध्रपुष्पाकारशूकशालौ ।

**रोध्रादिगणः** । पुं । रोध्रशावररोध्रपलाशजिङ्गिनीसरलकट्फलयुक्ताकुत्सिताम्बःकदलीगतशोकैलवालुपरिपेलवमोचाख्यं । गुणाः—मेदःकफहरः योनिदोषहरः स्तम्भी वर्ण्यः विषघ्नश्च । वा.सू.१५अ. ।

**रोपः** । पुं । रोपणे । मे. । क्ली । छिद्रे । हे.च.

**रोपणः** । पुं । पारदे । भूधामनवृक्षे । वै.निघ. क्षतादिपूरणे । अञ्जनभेदे भा. ।

**रोपणचूर्णम्** । क्ली । नेत्ररोपणाञ्जनविशेषे । यथा —"शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा । गृह्णीयात् तज्जलं सर्व्वं त्यजेच्चूर्णमधोगतम् । शुष्कं तच्च जलं सर्व्वं पर्पटीसन्निभं भवेत् विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः । कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत् ॥" भा. ।

**रोपणाञ्जनम्** । क्ली । कषायस्नेहसंयुक्ताञ्जने तोड़. । तिक्तद्रव्यैरञ्जने । च.द.अञ्जनाधिकारे ।

**रोपणीवर्त्तिः** । पुं । कुसुमाभिधनेत्राञ्जनवर्त्तिभेदे । यथा—"अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः । जातीपुष्पाणि पञ्चाशन्मरिचानि च षोडश । सूक्ष्मं पिष्ट्वाम्बुना वर्त्तिः कृता वै सुमिकाभिधा । तिमिराज्र्जुन ...काणां नाशिनी ······ ॥" भा. ।

**रोप्यशालिः** । पुं । छिन्ने पुनरुप्ते शालौ रोओयाधान । गुणौ —रुच्यः मलमङ्गकारकश्च रा.नि.व.१६ ।

**रोप्यातिरोप्यः** । पुं । रोप्यशालौ । रोओशालि धान । गुणाः— लघुः, आशुपाकः अदोषघ्नः बल्यः मूत्रवर्द्धनश्च । राज. ।

**रोमम्** । क्ली । पत्रे । तेजपत्र । मद.व. जले । श.च. ।

**रोमः (कः)** । पुं । मत्स्याभिक्षे । वै.निघ.

**रोम (न)** । क्ली । तमालपत्रे । तेजपत्र मद.व.१ । लोम्नि । रोँओया । रा.नि.व.१८

रोमकम् । क्ली । शाम्भरलवणे । रुमावतीनदी जलवणे इति । र.सा.सं.टीका । शम्बरलवण । हिं शाकम्भरि । गुणाः — तीक्ष्णम् अत्युष्णं कटु तिक्तं दीपनं दाहशोषकरं ग्राहि पित्तकोपनञ्च । रा.नि. व.६ । कान्तलौहभेदे । रा.नि.व.१३ । [वि.७ ।

रोमकन्दः । पुं पिण्डालौ । रक्तालौ । रा.नि.

रोमकर्णः । पुं । शशके । वै.निघ. ।

रोमकाख्यम् । क्ली । शाम्भरलवणे, मृत्तिकालवणे । कान्तलौहे । वै.निघ. ।

रोमकूपः । पुं । रोमविवरे ।

रोमकिशरम् । क्ली । चामरे । त्रिका. ।

रोमगुच्छ(क)म् । क्ली । चामरे । है.च. । जटा. । [चुद्रदी.चि. ।

रोमतचरी । स्त्री । मरीमस्त्रियाम् । रस.र.

रोमद्वीपः । पुं । कूर्मे । वै.निघ. ।

रोमन्थः । पुं । पशूनां चर्व्वितचर्व्वणे । जाओर कटि । अम. । [निघ. ।

रोमफला । स्त्री । डिण्डिशे । ढ्याड़श । वै.

रोमभूमिः । स्त्री । चर्म्मणि । रा.नि.व.१८ ।

रोमलता । स्त्री । रोमराज्याम् । श.च. ।

रोम(क)लवणम् । क्ली । शाम्भरलवणे । सौवर्च्चललवणे । र.सा. । [रा.नि.व.३ ।

रोमवल्ली । स्त्री । कपिकच्छौ । आलाकुशी ।

रोमविकारः । पुं । रोमाञ्चे । हला. ।

रोमशम् । क्ली । पद्मे । तेजपत्र । मद.व.३ । पुं । पिण्डालुनामकन्दशाके । रा.नि.व.७ । मेषे । भेड़ा । श.च. । कोङ्कणदेशप्रसिद्धे कुम्भीवृक्षे । रा.नि.व.६ । मन्दविषवृश्चिकभेदे । सु.कल्प.८अ. । शूकरे । रा.नि.व.१९ । [ड़ा ।

रोमशपत्रा । स्त्री । देवताड़वृक्षे । देयाता-

रोमशफलः । पुं । डिण्डिशवृक्षे । ढाड़श । भा.पू.१भ.शा.व. । [निघ. ।

रोमशमूलिका । स्त्री । हरिद्रायाम् । वै.

रोमशा । स्त्री । कोङ्कणे कुकड़ीति ख्याते दग्धानामवृक्षे । रा.नि.व.६ । कर्कटिकायां । काँकुड़ । त्रिका. । अलगर्द्दनामसविषजलौकाभेदे । अलगर्द्दजोंक । सु.सू.१३अ. । मांसरोहिण्याम् । वै.निघ. ।

रोमशातनम् । क्ली । रोम्णाम् उद्धंसने । वै. निघ. । तदौषधं सुहीचीरेण भल्लातकस्नेहः । सु. चि.१अ. । [भा. ।

रोमशुकम् । क्ली । स्थौणेयके । गेंटेला ।

रोमहरणम् । क्ली । हरिताले । र.सा.सं. ।

रोमहर्षः (कः) । पुं । रोमाञ्चे । मा.नि. । "रोमहर्षोऽरुचिस्तमः ।" विभीतकवृक्षे । वै.निघ. ।

रोमहर्षणम् । क्ली । रोमाञ्चे । अम. । पुं । विभीतकवृक्षे । मे. ।

रोमाख्यम् । क्ली । शाम्भरलवणे । वै.निघ. ।

रोमाञ्चः । पुं । रोमहर्षे । अम. ।

रोमाञ्चिका । स्त्री । रुदन्तीनामसहाक्षुपे । रा.नि.व.५ ।

रोमान्तीज्वरः । पुं । ज्वरविशेषे । हामज्वर । "रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः । कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्व्विकाः ॥" मा. नि. । भैष.मसूरि.चि. । [र्मा । श.म. ।

रोमाली । स्त्री । रोमराजिकायाम् । वयःस-

रोमालुः । पुं । पिण्डालौ । रा.नि.व.७ । कपिकच्छौ । आलाकुशी । रा.नि.व.३ ।

रोमालुविटपी (इन्) । पुं । कोङ्कणदेशप्रसिद्धकुम्भीवृक्षे । रा.नि.व.६ ।

रोमावर्त्तः । पुं । तन्नामकमर्म्मस्थाने शिरासन्धिसन्निपातरूपे । सु.शा.६अ. । [हे.च. ।

रोमावली । स्त्री । नाभेरूर्द्ध रोमराज्याम् ।

रोमाश्रयफला । स्त्री । भिञ्भिरीटाक्षुपे । रा.नि.व.४ ।

रोमेश्वरः । पुं । वैद्यामृतग्रन्थकारे ।

रोलः । पुं । आर्द्रशुण्ठ्यां । फलविशेषे, पानीयामलके । श.च. । तालीशपत्रे । कश्चित् ।

रोलम्बः । पुं । भ्रमरे । त्रिका. ।

रोषणः । पुं । पथवकवृक्षे । कलसा गाछ । पारदे । निकषोपले । मे. । ऊषरभूमौ । हे.च. ।

**वैकङ्कतः** । पुं । स्रुवावृक्षे । वँइचि गाछ । श. र. ।

**वैकतिकः** । पुं । मणिकारे । हे.च. ।

**वैकरञ्जः** । पुं । दर्व्वीकरादीनां सर्पाणां व्यतिकरेण जाते सर्पजातिविशेषे । स माकुलिः पोटगलः स्निग्धराजिश्चेति त्रिविधः । सु.कल्प.४अ. ।

**वैकुण्ठः** । पुं । अर्ज्जके । क्षुद्रतुलसी । "वैकुण्ठमर्ज्जके प्राहुः ।" रा.नि.व.२३ । सितार्ज्जके । श्वेतपत्र क्षुद्रतुलसी । रा.नि.व.१० । See अर्ज्जकः ।

**वैकुण्ठाश्मी** (इन्) । पुं । वैद्यवल्लभनामय्यन्यकारे । [नि. ।

**वैकृतः** । त्रि । विकृतिसम्पन्ने । दुःसाध्ये । मा.

**वैकृतज्वरः** । पुं । अप्रकृतकालजाते वातज्वरे । "प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः । हेतवो विविधास्तस्य निदाने सम्प्रदर्शिताः ॥" च. चि.३अ. । वर्षादिषु वाताद्यैः क्रमाद्यो ज्वरः स प्राकृतः, वर्षासु वातिकः, शरदि पैत्तिकः, वसन्ते च श्लैष्मिकः, अतोऽन्यो वैकृतः तथा वर्षासु पैत्तिक इत्यादि । मा.नि. ।

**वैक्रान्तम्** । क्ली । स्वनामख्यातमणिविशेषे । चूनौविशेष । तच्च श्वेतनीलरक्तभेदेन त्रिधा । निरुक्तिः—"वज्राकारतयैव प्रसह्य हरणाय सर्व्वरोगाणाम् । यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥" गुणाः—रसवीर्य्यविपाकेषु वज्रसमं क्षयकुष्ठविषघ्नं पुष्टिकरं रसायनञ्च । अपिच—"वैक्रान्तं वज्रसदृशं वज्रवद्रसवीर्य्यकम् । तथाप्यभावे वज्रस्य ग्राह्यं वैक्रान्तमुत्तमम् ॥" रा.नि.व. १३ । तच्छोधनमपि हीरकवत् । See हीरकम् । "वैक्रान्तं वज्रवत् शोध्यं नीलं श्वेतञ्च लोहितम् । वज्रलक्षणसंयुक्तं दाहघातासहिष्णु सत् । हयमूत्रेण तत् सिञ्चेत् तप्तं तप्तं त्रिसप्तधा । पञ्चाङ्गोत्तरवारुण्या लिप्तं मूषागतं पुटैः । कुञ्जराख्यैर्मृतिं याति वैक्रान्तं सप्तभिस्तथा । भस्मीभूतन्तु वैक्रान्तं वज्रस्थाने नियोजयेत् ॥" अचि.७अ. ।

**वैगन्धिकः** । पुं । गन्धके । वा.उ.३६अ. ।

**वैजननः** । पुं । प्रसवमासे । अम. ।

**वैजपाणिः** । पुं । ऋषिविशेषे । च. ।

**वैजयन्तिका** । स्त्री । जयन्तीवृक्षे । জয়ন্তীগাছ । अम. । अग्निमन्थवृक्षे । গণিরি । रा.नि.व.६ ।

**वैजयन्ती** स्त्री । जयन्तीवृक्षे । र.मा. । सु. चि.११अ. । अग्निमन्थे । গণিরি । हे.च. । सु. चि.१८अ. । [illegible]अ. ।

**वैजिकम्** । क्ली । शिग्रुतैले । শজিনার তৈল । मे. । पुं । सद्योजाताङ्कुरे । मे. । आत्मनि । श.मा. ।

**वैडालशकृत्** । क्ली । विडालविष्ठायाम् । "वैडालं वा शकृद् योज्यं वेपमानस्य धूपने ।" च.द. ज्व.चि.धूपे ।

**वैणवम्** । क्ली । वेणुयवे । বংশধান্য । अम. । पुं । उपनयने वेणुदण्डे । अम. । स्त्री (वी) । वंशलोचनायाम् । रा.नि.व.६ । [अम. ।

**वैतंसिकः** । पुं । मांसविक्रेतरि । কসাই ।

**वैतरणवस्तिः** । पुं । निरूहवस्तिभेदे । यथा —"पलप्रमितिककर्षकुडवैरम्लीकासगुडसिन्धुगोमूत्रैः । ईषत्तैलयुतो वस्तिः शूलानाहामवातहृत् । वैतरणः क्षारवस्तिः भुक्ते चापि प्रदीयते ॥" च.द.निरूहवस्तौ । गोमूत्रं ८ प. पक्वतैलं १ प. मदनफलस्यैकं व्यवहारात् । एकपुटकस्येयं मात्रा ।

**वैतसः** । पुं । अम्लवेतसे । जटा. ।

**वैदर्भः** । पुं । दन्तमूलगतमुखरोगे । "घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् । भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ॥" सु.नि.१६अ. ।

**वैदलः** । पुं । दालिनिर्म्मितपिष्टकभेदे । দাল পুরি । श.च. । गुणाः – गुरुः भक्ष्यः विष्टम्भी स्पष्टमारुतश्च । राज. ।

**वैदलान्नम्** । क्ली । वैदलयुक्तभक्ते । ডালিয়া[illegible] गुणाः—"वैदलान्नं रुचिकरं गुरु द्रव्यगुणैः स[illegible]म् ।" वै.निघ. ।

**वैदलिकशिम्बः** । पुं । वैदलिकशिम्बा[illegible] गुणाः—"रुचिप्रदाश्चैव सुदुर्जराश्च सर्व्वे [illegible] वैदलिकास्तु शिम्बाः ।"

**वैदारिकः** । पुं । हीनमध्यप्रवृद्धवातादिजनितसन्निपातज्वरे । लक्षणं—"अल्पमूलकटीतोदा[illegible]कं भवति । एतस्मिन् निहन्ति कर्णमूले पिड[illegible]दि जायते । भा.म.१भ. ।

**वैदिका ।** स्त्री । भूमिजम्बूवृक्षे । वनजाम । वै. निघ. ।

**वैदुलम् ।** क्ली । वेतसमूले । सु.चि.१८. ।

**वैदूर्य्य(रत्न)म् ।** क्ली । विदूरभूमिजमणौ । प्रवालविशेष । रा.नि.व.१३। गुणा:—उष्णमम्लं कफवातघ्नं गुल्मघ्नं शुभावहं कैतुग्रहवलभश्च । भा.। See माणिक्यम् ।

**वैदूर्य्यवर्ण: ।** त्रि । कृष्णवर्णे । भा. ।

**वैदेहिका (ही) ।** स्त्री । पिप्पल्याम् । भा.पू. १भ. । रा.नि.व.६ । भैष.नै.रो.चि. । "वैदेही श्वेतमरिचम् ।" रोचनायाम् । मे. । भूजम्बूवृक्षे । वै.निघ. ।

**वैद्य: ।** पुं । चिकित्सकजातौ । चिकित्सके । "विप्रो वैद्यकपारग: शुचिरनूचान: कुलीन: कृती धीर: कालकलाविदास्तिकमतिर्दक्ष: सुधीर्धार्म्मिक: । स्वाचार: समदृग्दयालुरखलो य: सिद्धमन्त्रक्षम: शान्त: काममलोलुप: कृतयशा वैद्य: स विद्योतते ॥" इति सद्वैद्यलक्षणम् । "अधीर: कर्कशस्तब्ध: सरोगी न्यूनशिक्षित: । पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा अपि ॥" इति कुवैद्यलक्षणम् । रा.नि.व.२० । अपिच—"व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रह: । एतद्वैद्यस्य वैद्यत्वं न वैद्य: प्रभुरायुष: ॥" इति वैद्यकर्म्म । भैष. । वैद्या: त्रिधा—छद्मचरा: सिद्धसाधिता: गुणयुक्ताश्चेति । लक्षणानि यथा—"वैद्यभाण्डौषधै: पुस्तै: पल्लवैरवलोकनै: । लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपका: । श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधा: । वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिता: । प्रयोगज्ञानविज्ञानसिद्धिसिद्धा: सुखप्रदा: । जीविताभिसरा ये स्युर्वैद्यत्वं तेष्ववस्थितम् ॥" च.सू.११ अ. । वासावृक्षे । श.च. ।

**वैद्यकम् ।** क्ली । वैद्यस्य कर्म्मणि । अष्टाङ्गचिकित्साशास्त्रे, दशाङ्गवैद्यशास्त्रे च । यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्या-गदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रञ्च । सु. । द्रव्याभिधानं रुग्विनिश्चय: कायसौख्यसम्पादनं शल्यविद्यापञ्चाक्षरीप्रभावेण भूतनिग्रह: विषप्रतीकार: वालोपचार: रसायनं शालाक्यं वृष्यञ्चेति । वै.निघ. ।

**वैद्यचिन्तामणि: ।** पुं । वल्लभेन्द्रकृतवैद्यकग्रन्थे । [न्थे । रुद्रटकृते च ।

**वैद्यजीवनम् ।** पुं । लोलिम्बराजकृतवैद्यकग्र-

**वैद्यतोषसंग्रह: ।** पुं । भीमसेनकृतचिकित्सासंग्रहे । [कौटीकायां ।

**वैद्यत्रिंशट्टीका ।** स्त्री । चन्द्रटकृतत्रिंशच्छ्लो-

**वैद्यदर्पणम् ।** क्ली । वैद्यकसंग्रहे ।

**वैद्यनाथवटी ।** स्त्री । ज्वरातिसारे औषधम् । पाठ: —"रसस्य शाणं संगृह्य काञ्जिकेन तु शोधयेत् । चित्रकस्य रसे चापि त्रिफलायाश्च बुद्धिमान् । रसार्द्धं गन्धकं शुद्धं भृङ्गराजरसेन वै । द्वाभ्यां संमूर्च्छनं कृत्वा स्वरसै: शाणसम्मितै: । खल्लयेच्च शिलाखल्ले क्रमशो वक्ष्यमाणजै: । निर्गुण्डीमण्डूकीश्वेताकुचैलाशोभसुन्दरै: । भृङ्गाह्वकेशराजैश्च जयन्तीन्द्राशनोत्कटै: । सर्षपाभां वटीं कृत्वा दद्यात्तां ग्रहणीगदे ..... ॥" रस.र. । [छ । श.च. ।

**वैद्यबन्धु: ।** पुं । आरग्वधवृक्षे । शोन्दाल गा-

**वैद्यमनोरमा ।** स्त्री । वैद्यकग्रन्थभेदे ।

**वैद्यमाता ।** स्त्री। वासायाम् । वासक गाछ । अम. ।

**वैद्यरसायनम् ।** क्ली । रसायनग्रन्थविशेषे ।

**वैद्यवल्लभ: ।** पुं । उदयरुचिकृतवैद्यकग्रन्थे ।

**वैद्यविनोद: ।** पुं । शङ्करकृतवैद्यकग्रन्थे ।

**वैद्यविलास: ।** पुं । रघुनाथकृतवैद्यकशास्त्रे ।

**वैद्यवृन्द: ।** पुं । नारायणकृतवैद्यशास्त्रे ।

**वैद्यसार: ।** पुं । हर्षकीर्त्तिरचितवैद्यके ।

**वैद्यसिंही ।** स्त्री । वासायाम् । वासक गाछ । श.र. ।

**वैद्यहितोपदेश: ।** पुं । श्रीकण्ठकृते तथा शिवपण्डितकृते च चिकित्साशास्त्रे ।

**वैद्या ।** स्त्री । काकोल्याम् । काँकला । श.च. ।

**वैद्यामृतम् ।** क्ली । नारायणदासकृते रामेश्वरकृते च वैद्यशास्त्रे । [कग्रन्थे ।

**वैद्यामृतलहरी ।** स्त्री । मथुरानाथकृतवैद्य-

**वैद्यावतंस: ।** पुं । लोलिम्बराजकृतवैद्यके ।

**वैधात्री** । स्त्री । ब्राह्मीक्षुपे । रा.नि.व.५ ।

**वैपरीत्यलज्जालुः** । पुं, स्त्री । लघुलज्जालुकायाम् । "लज्जालुर्वैपरीत्यान्या स्वल्पक्षुपहइद्दला ।" गुणाः—कटुरुष्णः कफघ्नः रसनियामकः नानाविज्ञानकारकश्च । रा.नि.व.५ ।

**वैरस्यम्** । क्ली । मुखविरसतायाम् । "वैरस्यं नयनस्रवः ।" मा.नि. ।

**वैराटः** । पुं । इन्द्रगोपकीटे । हे.च. ।

**वैराटकः** । पुं । तन्नामककन्दविषभेदे । गुणाः—"वैराटकेनातिदुःखं शिरोरोगश्च जायते ।" सु.कल्प.२अ. । See कन्दविषम् ।

**वैरातङ्कः** । पुं । अर्ज्जुनवृक्षे । रा.नि.व.९ ।

**वैरोचनरसः** । पुं । अजीर्णादौ रसः । पाठः—"मृतसूतं चतुर्भागं भागैकं मृतहेमकं । अष्टभागं शुद्धगन्धं दिनैकं चित्रकद्रवैः । मर्दितं शोधितं चूर्णं वराटीस्तेन पूरयेत् । टङ्कणेन मुखं रुद्धा भाण्डमध्ये निरोधयेत् । शुष्कं गजपुटे पच्यात् साङ्गशीतं विचूर्णयेत् । चतुर्गुञ्जा कणा क्षौद्रं लौहम ग्निप्रदीपनम्……॥" रस.र. ।

**वैल्वम्** । क्ली । विल्वफले । अ.टी. । त्रि । विलभवे । विलशये । वा.चि.१अ. ।

**वैवर्ण्यम्** । क्ली । विवर्णतायाम् । मा.नि. ।

**वैवस्वतद्रुमः** । पुं । कुष्ठवैरिवृक्षे । चालमुगरा । भा.चि. ।

**वैशाखः** । पुं । मन्थनदण्डे । वर्षस्य प्रथमे मासि । अम. । रक्तपुनर्नवायाम् । वै.निघ. । अश्वस्य तन्नामकग्रहे । लक्षणं—"स्कन्देन गुरुणा चैव वेपमानेन पण्डितः । गात्रेण विद्याद्वाहन्तु वैशाखग्रहसेवितम् ॥" ज.द.५७अ. । स्त्री (खी) । रक्तपुनर्नवायाम् । गादापूणा । रा.नि.व.५ ।

**वैशिकी** । स्त्री । वमनविरेचनयोः चतुर्विधशोधनान्यतमे । च.द.शमनाधिकारे । [नि.व.३ ।

**वैशिजाता** । स्त्री । पुत्रदात्रीलतायाम् । रा.

**वैश्या** । स्त्री । हरिद्रायाम् । वै.निघ. ।

**वैश्रवणालयः** । पुं । वटवृक्षे । हे.च. ।

**वैश्रवणावासः** । पुं । वटवृक्षे । जटा. ।

**वैश्रवणोदयः** । पुं । वटवृक्षे । र.मा. ।

**वैश्वानरः** । पुं । चित्रकवृक्षे । अम. । पित्ते । अग्नौ । अम. ।

**वैश्वानरचूर्णम्** । क्ली । अजरसाम्ने चूर्णम् । पाठः—"माणिमन्थस्य भागौ द्वौ यमान्यास्तद्देव तु । भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकं । द्वा द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृताः शुभाः । मस्तु. मस्तुकाञ्जिकं तक्रमुष्णोदकं वा… ।" रस.र. ।

**वैश्वानररसः** । पुं । उदराधिकारे रसः । पाठः—"रसकं गन्धकं चाभ्रं शिलाजित्कान्तलौहकं । त्रिकटुश्चित्रकं कुष्ठं निर्गुण्डी मुषली विषम् । अजमोदा च सर्व्वेषां द्वौ द्वौ भागौ प्रकल्पयेत् । चूर्णीकृत्य ततः सर्व्वं निम्बक्वाथेन भावयेत् । भावयेदेकविंशच्च भृङ्गराजेन सप्तधा । मधुना गुडिकां शुष्कां रजन्यां तां प्रदापयेत् । वैश्वानराभिधो योगो जलोदरविशोषणः ।" रस.चि. ।

**वैष्किरः** । त्रि । विकीर्य्य भक्षणशीले, कुक्कुटादौ । वा.चि.६अ. ।

**वैष्णवी** । स्त्री । लघुशतावर्य्याम् । रा.नि.व.४ । तुलसीवृक्षे । श.मा. ।

**वैसारिणः** । पुं । मत्स्ये । अम. ।

**वोड़ः** । पुं । गुवाकवृक्षे । श.र. । [विशेषे । मे.

**वोड्रः** । पुं । गोनसम .वाड़ासाप । मत्स्य

**वोढ़ः** । पुं । कदम्ब । वै.निघ. ।

**वोढ़ा** (ढृ) । पुं । ऋषभके । रा.नि.व.५ ।

**वोण्टः** । पुं । वृन्ते । वोँटा । श.र. ।

**वोदालः** । पुं । मत्स्यविशेषे । वोयाल माछ श.र. । [स्त्रीप्रणीतरि

**वोपदेवः** । पुं । हृदयदीपकसिद्धमन्त्रशतश्लो

**वोरटः** । पुं । कुन्दवृक्षे । कुन्द गाछ । त्रिक

**वोरवः** । पुं । तन्नामकव्रीहिधान्यभेदे । वोट धान । गुणाः—"वोरवस्तु बुधैः प्रोक्तः त्रिदोषप्रकोपनः । मधुरश्चाम्लपाकेन व्रीहिः पित्तकगुरुः ॥" राज.३प. ।

**वोलम्** । क्ली । (Balsamodendr Myrrh.) Myrrh. तन्नामकसारजद्रव्

गम्भरसे। गक्करस, বোল, হিরাবোল, থুনথারাপী। हिं दा. बोल। मं कं बोल। तें वालिम्बोपोलम्। ता. वेल्लइपपोलम्। वम्. रक्ता बोल। वै.निघ.२भ.र.पि.चि.बोलपर्पटीरसे। च.द.कुष्ठचि.। गुणाः—कटुतिक्तोष्णं कषायं रक्तदोषघ्नं कफपित्तरोगघ्नं प्रदरघ्नञ्च। रा.नि.व.६।

**बोलपत्रम्**। क्ली। तेजपत्रसदृशसुगन्धिपत्रे। च.द.वा.व्या.चि.महाराजप्रसारणीतैले। "देवपुष्पी बोलपत्रम्।"

**व्यक्तगन्धा**। स्त्री। नीलापराजितायाम्। रा.नि.व.३। स्वर्णयूथिकायाम्। रा.नि.व.१०। पिप्पल्याम्। वै.निघ.।

**व्यङ्गः**। पुं, क्ली। तन्नामकगण्डरोगभेदे। तस्य लक्षणम्—"क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। मुखमागत्य सहसा मण्डलं विसृजत्यतः। नीरुजं तनुकं श्यावं मुखव्यङ्गं तमादिशेत्॥" मा.नि.। "परुषं परुषस्पर्शं व्यङ्गं श्यावञ्च मारुतात्। पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात्। रक्ताद्रक्तान्तमाताम्रं शोषचिमचिमान्वितम्॥" वा.उ.३१ऋ.।

**व्यजनम्**। क्ली। तालवृन्ते। পাখা। तद्वायुगुणाः—"मूर्च्छास्वेदतृषादाहश्रमघ्नो व्यजनानिलः।" तालव्यजनगुणाः—त्रिदोषघ्नं लघु च। वंशव्यजनगुणाः—रूक्षमुष्णं वातपित्तकरञ्च। मयूरपुच्छवस्त्रव्यजनगुणाः—त्रिदोषघ्नम्। बालव्यजनं तेजस्करं मक्षिकादिनिवारणञ्च। राज.३प.।

**व्यञ्जनम्**। क्ली। सूपशाकादिमिष्टान्नेषु। ব্যঞ্জন, তরকারি। "व्यञ्जनं सूपशाकादि मिष्टान्नं तेमनं स्मृतम्।" रा.नि.व.२०। शाकमत्स्यगुणाः—"व्यञ्जनं शाकमत्स्याद्यं हृद्यं तृप्यञ्च पुष्टिदं। द्रव्येण येन येनेह व्यञ्जनं मत्स्यमांसयोः। तस्य तस्य तयोश्चैतद्गुणदोषैर्विभावयेत्॥" राज.३प.। श्मश्रुणि। দাড়ি। वै.निघ.। लक्षणे। चिह्ने। व्यक्तीभूतपूर्व्वरूपे। "संस्थानं व्यञ्जनं लिङ्गम्।" मा.पञ्चनिदाने।

**व्यञ्जनकेशी**। स्त्री। नील्याम्। रा.नि.व.४।

**व्यड्म्बकः (नः)**। पुं। एरण्डवृक्षे। भम.। सं.वनकतैले। [नः। वै.निघ.।

**व्यण्डा**। स्त्री। भूम्यामलक्याम्। ভূঁই আ-

**व्यतिक्रमः**। पुं। क्रमविपर्य्यये।

**व्यत्यासः**। पुं। परस्परक्षेपणे। वा.चि.१८ऋ.। "व्यत्यासेन प्रक्रद्रक्रम्।"

**व्यथा**। स्त्री। वेदनायाम्। भम.।

**व्यन्तरः**। पुं। सर्पसङ्करजातौ। वा.उ.३६ऋ.।

**व्यवसायः**। पुं। निश्चयबुद्धौ। यथा—वातिक एवायं व्याधिरिदमेवास्य भेषजमिति। च.वि.८ऋ.।

**व्यवहारिकः (का)**। पुं. स्त्री। इङ्गुदीवृक्षे। सम्मार्जन्यां। मे.। [तिजसि। मे.।

**व्यवायः**। पुं। स्त्रीसेवायाम्। भम.। क्ली।

**व्यवायशोषः**। पुं। स्त्रीसेवाजन्यशोषरोगे। लक्षणं यथा—"व्यवायशोषः शुक्रस्य क्षयलिङ्गैरुपद्रुतः। पाण्डुदेहो यथा पूर्व्वं क्षीयन्ते चास्य धातवः॥" सु.उ.४१ऋ.। [६५ऋ.।

**व्याख्यानम्**। क्ली। अतिशयोपवर्णने। सु.उ.

**व्याघ्रः**। पुं। स्वनामख्यातप्रसहजातीयमृगे। বাঘ। मांसगुणाः सिंहवत्। रा.नि.व.१९। करञ्जवृक्षे। मे.। रक्तैरण्डे। रा.नि.व.८।

**व्याघ्रकरः**। पुं। रक्तैरण्डे। वै.निघ.।

**व्याघ्रखड्गः**। पुं। व्याघ्रनखे। নখীবিশেষ। वै.निघ.।

**व्याघ्रघण्टा (ण्टी)**। स्त्री। कोङ्कणे प्रसिद्धलताविशेषे। वम्. लघु वाघाण्टी। मं गोविन्दी। गुणाः—"व्याघ्रघण्टा पित्तलोष्णा कृष्या विषकफापहा। फलं चास्यास्तु तिक्तोष्णं विसूचीकफवातनुत्। त्रिदोषहारिणी प्रोक्ता वैद्यशास्त्रविशारदैः।" वै.निघ.।

**व्याघ्रतरुः**। पुं। रक्तैरण्डे। वै.निघ.।

**व्याघ्रतलः (ला)**। पुं। व्याघ्रनखे। নখী। वै.निघ.। रक्तैरण्डे। श.द.।

**व्याघ्रदलः (ला)**। पुं। रक्तैरण्डे। व्याघ्रनखे। নখী। रा.नि.व.८।

**व्याघ्रनखम्**। क्ली, पुं। नखीनामगन्धद्रव्ये। নখীবিশেষ। मं उत्. वाघनखा। गुणाः—तिक्तोष्णः कषायः वातकफघ्नः कण्डूकुष्ठव्रणघ्नः वर्ण्यः सुगन्धश्च। रा.नि.व.१२। सु.मू.३८ऋ.एलादिः। समुद्रजः—वा.मू.१५ऋ.एलादिः। 'शुक्तिव्याघ्रन-

ख्य: ।" कुड़ीइति । मनसा गाछ । रा नि.व.८ ।

**व्याघ्रनखी** । स्त्री । व्याघ्रनखे । भा.४भ.प्रद. चि. । "शुचिस्थाने व्याघ्रनख्या: ।"

**व्याघ्रनायक: (सेवक:)** । पुं । शृगाले । फेउ, शृगाल । रा.नि.व.१८ ।

**व्याघ्रपात् (द:)** । पुं । विकङ्कतवृक्षे । बँइ-चौ गाछ । भा. । रा.नि.व.६ । भैष.शिरोरो.चि. तमराजतैले । विकण्टकवृक्षे । रा.नि.व.११ ।

**व्याघ्रपुच्छ:** । पुं । एरण्डवृक्षे । अम. ।

**व्याघ्रपुष्प:** । पुं । व्याघ्रनखे । वै.निघ. ।

**व्याघ्ररूपा** । स्त्री । वन्ध्याकर्कोट्याम् । वै.निघ. ।

**व्याघ्रहस्त:** । पुं । रक्तैरण्डे । रा.नि.व.८ ।

**व्याघ्राङ्घ्रिज:** । पुं । व्याघ्रनखे । नखीविशेष । वै.निघ. ।

**व्याघ्राट:** । पुं । भरद्वाजपक्षिणि । अम. ।

**व्याघ्रादनी** । स्त्री । त्रिवृतायाम् । प.मु. ।

**व्याघ्रायुधम्** । क्ली । व्याघ्रनखे । नखीविशेष । वै.निघ. ।

**व्याघ्रास्य:** । पुं । विड़ाले । श.च. ।

**व्याघ्री** । स्त्री । कण्टकार्य्याम् । प.मु. । रा. नि.व.४ । च.द.यक्ष्म.चि.जीवन्त्याद्यघृते । "व्याघ्रीगोक्षुरसाधितां ।" च.द.ज्व.चि."व्याघ्रीदुस्पर्शगोक्षुरै: ।" वराटिकामर्दे । काड़िविशेष । रा.नि.व.१३ । व्याघ्रपत्न्याम् । बाघिनी । व्याघ्रनख्यां । नखीविशेष । च.द.वा.व्या.चि. ।

**व्याघ्रीयुक् (युगम्)** । स्त्री, क्ली । बृहत्यां, कण्टकार्य्याञ्च । चि.क्र.क. ।

**व्याड़:** । पुं । सर्पे । हिंस्रे । अम. ।

**व्याड़म्ब:** । पुं । रक्तैरण्डे । वै.निघ. । अम. ।

**व्याड़ायुधम्** । क्ली । नखीनामगन्धद्रव्ये । नखी ।

**व्याधि:** । पुं । रोगे । रोग । हिं बेमारी । पुरुषदु:खसंयोगा व्याधय: । ते चतुर्विधा: शारीरागन्तुमानसस्वाभाविकभेदेन । तत्रागन्तवोऽभिघातजन्या:, शारीरास्त्वन्नपानमूला: वातादिवैषम्यमूलाश्च । मानसा: क्रोधादिका इच्छाद्वेषभेदैर्भवन्ति । स्वाभाविका: क्षुत्पिपासादिकाश्च । सु.सू.१भ. । तत्र दु:खं त्रिविधम् आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति । तत्तु दु:खं सप्तविधे व्याधावुपनिपतति । ते पुन: सप्त व्याधय: यथा – आदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ता: संघातबलप्रवृत्ता: कालबलप्रवृत्ता: दैवबलप्रवृत्ता: स्वभावबलप्रवृत्ताश्चेति । तत्रादिबलप्रवृत्ता: शुक्रशोणितदोषान्वया: कुष्ठार्श:प्रभृतय: । शेषाणां विशेषा: तत्तत्पर्य्याये मृग्या: । सु.सू.२४भ. । रोग: दोषवैषम्यरूप: । "रोगस्तु दोषवैषम्यम् । रोगा दु:खस्य दातारो ज्वरप्रभृतयो हि ते ॥" ते च रोगा: केचित् स्वाभाविका: केचिदागन्तव: केचिन्मानसा: केचित् कायिका: केचित् कर्म्मजा: केचिद्दोषजा: केचित् साध्या: केचिद्याप्या: केचिदसाध्याश्च । तस्य च रोगस्य विज्ञानं पञ्चधा "हेतुर्मदन् सं प्राप्ति: पूर्व्वरूपञ्च लक्षणं । तथैवोपशय: पञ्च... ... ।" भा. । कुष्ठौषधौ । कुड़ । अम. । रस.र. स्नायरो.चि. । See रोग: । [काले । मा.नि. ।

**व्याधिकाल:** । पुं । रोगवृद्धिहानिहेतुभूते

**व्याधिघात: (क:)** । पुं । स्थूले आरग्वधवृक्षे । बड़ शोन्दाल गाछ । रा.नि.व.६ । च.द. ज्व.चि. । "गजाह्वा व्याधिघातक: ।" [द. ।

**व्याधिघ्न: (जित्)** । पुं । आरग्वधवृक्षे । अ.

**व्याधित:** । पुं । रोगिणि । रा.नि.व.२० ।

**व्याधिनाशन:** । पुं । द्वीपान्तरवचायाम् । चोपचिनि । वै.निघ. । [६ ।

**व्याधिरिपु:** । पुं । क[illegible]आरग्वधवृक्षे । रा.नि.व.

**व्याधिविपरीत:** । पुं । [illegible] दौ । यथा –अतिसारे मलरोधके पाठादौ ; मसूरादिपथ्ये । उदावर्त्ते अधोवायुनि:सारके देवगुरुसेवादौ । मा.नि. ।

**व्याधिहन्ता (र्त्ता)** । पुं । वाराहीनामकन्दशाके । शूयार आलू । रा.नि.व.७ ।

**व्याध्यर्गल:** । पुं । दामोदरकृतवैद्यकग्रन्थे ।

**व्यान: (वायु:)** । पुं । देहस्थवायुविशेषे । व्यानवायू । "कृत्स्नदेहचरो व्यान: रससंवहनोद्यत: । स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि । क्रुद्धश्च कुरुते रोगान् प्रायश: सर्व्वदेहगान् ।" सु.नि.१भ. ।

**व्यापत्** । पुं । कची । अधिकलवणादिभक्षण-जन्यरोगसङ्कटे । वैद्यकम् ।

**व्याप्यम्** । क्ली । कुष्ठौषधौ । कुड़ । अम. ।

**व्यामः** । पुं । तिर्य्यग्विस्तृतबाह्वोर्यदन्तरं स व्यामः । एक बाँउ । "व्यामः सहस्तस्तु तयोस्तिर्य्यग्बाह्वोर्यदन्तरम् ।" रा.नि.व.१८ ।

**व्यायामः** । पुं । वेगकृद्व्यापारे । च.सू.१५अ. । चक्रादिचालने । कुस्ति, मल्लश्रम । शरीरायासजनककर्म्मणि । भा.म.४भ.शिरोरो.चि. । "शरीरायासजननं कर्म्म व्यायामसंज्ञितम् ।" गुणादि— तत्कृत्वा तु सुखं देहं विमृद्नीयात्समन्ततः । शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता । दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ॥" इत्यादि । सु.चि.२४अ. । "व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनां । स च शीते वसन्ते च तेषां पथ्यतमो मतः । सर्व्वेष्वृतुषु सर्व्वैर्हि मर्त्त्यैरात्महितार्थिभिः । शक्त्यर्द्धेन च कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा । कक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते । शक्त्यर्द्धं तं विजानीयाद् यावदुच्छ्वासमेव च । लाघवं कर्म्मसामर्थ्यं स्थैर्यं क्लेशसहिष्णुता । दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते । व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनम् । विदग्धमविदग्धं वा निर्दोषं परिपच्यते । वयो बलं शरीरञ्च देशकालमथापि च । समीक्ष्य कुर्य्याद्व्यायामं युक्त्या शक्त्या च बुद्धिमान् । रक्तपित्ती क्षयी शोषी कासी श्वासी क्षतातुरः । भुक्तवान् स्त्रीषु च क्षीणो व्यायामं परिवर्ज्जयेत् । वातपित्तामयी बालो वृद्धो जीर्णश्च तं त्यजेत् । अतिव्यायामतः कासो रक्तपित्तमतानकौ । श्रमः क्लमः क्षयस्तृष्णा ज्वरश्छर्द्दिश्च जायते ॥" राज.२प. ।

**व्यायामशोषः** । पुं । अतिव्यायामजन्यशोषरोगे । लक्षणं—"व्यायामशोषी भूयिष्ठमेभिरेव समुपद्रुतः । लिङ्गैरुरःक्षतसमैः संयुक्तश्च क्षतं विना ॥"

**व्यायोजिमः** । पुं । स्थूलाणुसमविषमपालौ । सु.सू.१६अ. ।

**व्यालः** । पुं । व्याघ्रे । दुर्दान्तगजे । रा.नि.व.१८ । रक्तचित्रके । रा.नि.व.६ । चित्रकवृक्षे । भा.पू.१भ. । सर्पे । श्वापदे । अम. । [वै.निघ. ।

**व्यालकरजः** । पुं । व्याघ्रनखे । नखीविशेष ।

**व्यालखड्गः** । पुं । व्याघ्रनखे । नखीविशेष । रा.नि.व.१२ ।

**व्यालगन्धा** । स्त्री । लाङ्गलीनाममहाकन्दशाके । विषलाङ्गुलिया । रा.नि.व.७ । [नि.व.४ ।

**व्यालजिह्वा** । स्त्री । महासमङ्गायाम् । रा.

**व्यालदंष्ट्रः** । पुं । गोक्षुरक्षुपे । रा.नि.व.४ ।

**व्यालनखः** । पुं । व्याघ्रनखे । नखीविशेष । रा.नि.व.१२ । क्षुद्रौषधे । रा.नि.व.८ ।

**व्यालपत्रः** । पुं । ऐर्व्वारुकलतायाम् । फुट् काँकुड़ । कश्चित् ।

**व्यालपत्रा (त्रिका, त्री)** । स्त्री । कर्कटीभेदे । काँकुड़विशेष । रा.नि.व.७ ।

**व्यालपाणिजः** । पुं । व्याघ्रनखाख्यगन्धद्रव्ये । नखी । रा.नि.व.११ । [वै.निघ. ।

**व्यालप्रहरणम्** । क्ली । व्याघ्रनखे । नखी ।

**व्यालबलः** । पुं । व्याघ्रनखे । नखी । रा.नि.व.१२ । [भारतम् ।

**व्यालमृगः** । पुं । चित्रकव्याघ्रे । चिता बाघ ।

**व्यालम्बः** । पुं । रक्तैरण्डे । वैद्यकम् ।

**व्यालवल्ली** । स्त्री । नागवल्ल्याम् । पाण गाछ । वै.निघ. । [पा । वै.निघ. ।

**व्यालवेणी** । स्त्री । देवदाल्याम् । पीत घो-

**व्यालायुधम्** । क्ली । नखीनामगन्धद्रव्ये । अ. टी.मथुरा. । पुं । व्याघ्रनखे । नखी । रा.नि.व.१२ ।

**व्यालीढ़(दष्टक)म्** । क्ली । सर्पदंशनभेदे । लक्षणं यथा—"एकं दंष्ट्रापदं द्वे वा व्यालीढ़ाख्यमशोणितम् ।" वा.उ.३६अ. ।

**व्यालुप्त(दष्टक)म्** । क्ली । सर्पदंशनभेदे । लक्षणं—'दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं···।" वा. उ.३६अ. ।

**व्यावर्त्तः (कः)** । पुं । चक्रमर्द्दे । चाकन्दा गाछ । रा.नि.व.४ । नाभिकण्टके । प्र.च. ।

**व्यासः** । पुं । परिमाणभेदे । वेध । प्र.र. ।

**व्यासद्वीपप्रजा** । स्त्री । वन्ध्याकर्क्कोटक्याम् । वै.निघ. । [च. । चि । ऊषिते । दग्धे । मे. ।

**व्युष्टम्** । क्ली । प्रभाते । पर्य्युषिते । फले । ह.

**व्यूहः** । पुं । देहे । त्रिका. ।

**व्योम** । क्ली । जले । मे. । आकाशे । अम. । अभ्रधातौ । रा.नि.व.१३ । शूल.चि.पीड़ामञ्जिर-से । वै.निघ.वा.व्या.चि.वातविध्वंसरसे । भैष.स्त्री-रो.चि.प्रदरारिरसे ।

**व्योमचारी** (इन्) । पुं । पक्षिणि । मे. ।

**व्योमनासिका** । स्त्री । भारतीपक्षिणि । त्रिका. ।

**व्योमपूरम्** । क्ली । सुगन्धतृणे । वै.निघ. ।

**व्योमवल्लिका** (ल्ली) । स्त्री । आकाशव-ल्ल्याम् । আলোকলতা । रा.नि.व.३ । [व.१४ ।

**व्योमोदकम्** । क्ली । आकाशसलिले । रा.नि.

**व्योषम्** । क्ली । त्रिकटुनि । শুঁট, পিপুল, মরিচ । भा. । एतच्च शिरोविरेचने शस्तम् । वा. सू.१५अ. ।

**व्योषाद्यगुग्गुलुः** । पुं । स्थौल्ये गुग्गुलुः । पाठः—"व्योषाग्नित्रिफलामुस्तविड़ङ्गं गुग्गुलुं स-मम् । खादेत्…… ॥" रस.र. ।

**व्योषाद्यघृतम्** । क्ली । अर्शसि घृतम् । पा-ठः—"व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि । साधितं पिबतः सर्पिः पतन्त्यर्शांसि निश्चितम् ॥" पलाशक्षारात् षड्गुणपरिस्रावितक्षारवारि ग्राह्यम् ।

**व्योषाद्यचूर्णम्** । क्ली । अर्शसि हितम् । "व्योषाऽग्न्यरुष्करविड़ङ्गतिलाभयानां चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम् ।" सर्व्वं समभागम् । अ-न्यत् ज्वरातीसारे – ত্রিকটু, ইন্দ্রযব, নিমছাল, চিরেতা, ভীমরাজ, চিতে, কটুকী, আক-নাদি, দারুহরিদ্রা, আতইচ প্রত্যেকে সম-ভাগ সর্ব্বসমান কুড়চিছাল চূর্ণ। মাত্রা ৪ মাষা । च.द. ।

**व्योषाद्यलौहम्** । क्ली । विद्रध्यधिकारे लौ-हम् । लक्षणं—"व्योषं त्रिवृत्त्रिकाकरीहिङ्गी च सायोरजस्तु त्रिफलारसेन । पीतं कफोत्थं शम-येत् शोथं गव्येन मूत्रेण हरीतकी च ॥" रस.चि. ।

**व्रजभूः** । पुं । कैलिकदम्बवृक्षे । श.च. ।

**व्रणः** । पुं, क्ली । तन्नामकरोगे, क्षतादौ । व्रণ-রোগ, घा । स द्विविधः शारीर आगन्तुश्चेति । तयोः शारीरः पवनपित्तकफशोणितसन्निपातनि-मित्तः । आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृप-प्रपतनपीड़नप्रहाराग्निक्षारविषतीक्ष्णौषधशकलक-पालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनि-मित्तः । तस्य लक्षणं द्विविधं सामान्यं वैशेषिक-ञ्च । तत्र सामान्यं रुग्व्रणगात्रविचूर्णने व्रणतीति व्रणः । विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः ।" सु.चि.१अ. । स पुनः पञ्चदशविधः । पृथग्दोषैस्त्र-यः संसर्गजास्त्रयः सन्निपातेनैकः एवम्भूता रक्तस-हितैः सप्त, एवं चतुर्दश, रक्तेन केवलेनैक इति पञ्चदश । "स पञ्चदशधा दोषैः सरक्तैस्तत्र मारु-तात् । श्यावः कृष्णोऽरुणो भस्मकपोतास्थिनिभो-ऽपि च । [illegible] । निर्मांसस्रावोदभेदाढ्यो रुक्चटचटायते । पित्तेन क्षिप्रजः पीतो नीलः कपिलपिङ्गलः । मूत्रकिंशु-कभस्माम्बुतैलाभोष्णबहुस्रुतिः । क्षारोक्षितक्षतस-मव्यथारागोष्मपाकवान् । कफेन पाण्डुः कण्डूमान् बहुश्वेतघनस्रुतिः । स्थूलौष्ठः कठिनः स्नायुशिरा-जालततोऽल्परुक् । प्रवालरक्तो रक्तेन सरक्तं पूय-मुद्गिरेत् । वाजिस्थानसमो गन्धे युक्तो लिङ्गैश्च पै-त्तिकैः । द्वाभ्यां त्रिभिश्च सर्व्वैश्च विद्याल्लक्षणसङ्करा-त् ।" इति । जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावौष्ठपि-टिकः समः । किञ्चिदुन्नतमध्यो वा व्रणः शुद्धोऽनु-पद्रवः । इति । त्वगामिषशिरास्नायुसन्ध्यस्थीनि व्र-णाश्रयाः । कोष्ठो मर्म्म च तान्यष्टौ दुःसाध्यान्युत्त-रोत्तरम् । सुसाध्यो नत्वमांस [illegible] प्रवर्त्तते व्र-णः । वृत्तो दीर्घस्त्रिपुटकश्च [illegible]कृतिश्च यः । तथा स्फिकपायुमेढ्रौष्ठपृष्ठान्तर्व[illegible]गः । कृच्छ्रसाध्यो-ऽक्षिदशननासिकापाङ्गनाभिषु । सेवनीजठरग्रीव-पार्श्वकक्षास्तनेषु च ।" इति । वा.उ.२५अ. । त-था—त्वङ्मांसशिरास्नाय्वस्थिसन्धिकोष्ठमर्म्माणीति । तत्राद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचारः शे-षाः स्वयमवदीर्य्यमाणा दुरुपचाराः । तत्रायतश्चतु-रस्रः वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः शेषा विकृताकृतयो दुरुपक्रमा भवन्ति । इति । व्रणवे-दना तु बहुधा तद्यथा—तोदनभेदनताड़नछेद-नायमनमन्थनविक्षेपणचुमचुमायननिर्दहनावभञ्ज-नस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषण-विकिरणपूरणस्तम्भनस्वप्नावकुञ्चनाङ्कुशिका भव-न्ति । इति । सु.सू.२२अ. । व्रणबन्धनं चतुर्दशवि-धं तानि च [illegible]

...कगिकावमकखट्टाचीनविबन्धविज्ञानगोपकषा: पञ्चाङ्गुलीति चतुर्दश । व्रणायतनविशेषेण तद्बन्धानि विधा गाढ़समशिथिलानीति । सु.सू.१८अ. । वाभटस्तु उत्सङ्गं पञ्चाङ्गुलीस्थाने पञ्चाङ्गीति स्वीकरोति । विशेषा: स्वस्वपर्य्यायेषु द्रष्टव्या: ।

**व्रणकृत्** । पुं । भल्लातकवृक्षे । ভেলা গাছ । र.मा. । [रा.नि.व.५ ।

**व्रणकेतु: (घ्नी)** । पुं, स्त्री । दुग्धफेन्याम् ।

**व्रणग्रन्थि:** । पुं । रोगभेदे । ব্রণের ঘেটা । लक्षणं—"अरूढ़े रूढ़मात्रे वा व्रणे सर्व्वरसाशिन: । सान्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथवा । वातास्रमसृतं दुष्टं संशोष्य ग्रथितं व्रणम् । कुर्य्यात्सदाह: कण्डूमान् व्रणग्रन्थिरयं स्मृत: ॥" वा.उ. २९अ. । [वै.निघ. ।

**व्रणघ्नी** । स्त्री । लघुकारवेल्लके । ছোট উচ্ছে ।

**व्रणजिता** । स्त्री । मुण्ड्याम् । মুণ্ডীরী । वै. निघ. । [शटी । श्र.च. ।

**व्रणद्विट्** । पुं । ब्राह्मणयष्टिकायाम् । বামন-

**व्रणधूपन:** । पुं । तन्नामकधूपदानविधौ । यथा—"शरावसम्पुटे छिद्रं कल्कमङ्गारदीपितम् । छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत् ॥" अत्र व्रणनाड़िका दशाङ्गुलमिता कार्य्या । भा. ।

**व्रणरोपणरस:** । पुं । क्षुद्ररोगाधिकारे औषधम् । पाठ:—"मन्त्रिशाहिफणातुल्यं त्र्यहं जम्बीरमर्दितं । कुमार्य्या नरमूत्रेण चित्रकेण च सिन्धुना । सौवर्च्चलेन च पृथक् युक्ता च विबुधै: क्रमात् ॥" मात्रा ६ र. । अनु. मधु । रस.चि. ।

**व्रणशोथ:** । पुं । व्रणनिमित्तश्वयथौ । तस्य पूर्व्वरूपं शोथस्यैकदेशोत्थानम् । स षट् वातपित्तकफसन्निपातरक्तागन्तुभेदेन । यथा—"पृथक्समस्तदोषोत्था रक्तजागन्तुजौ तथा । व्रणशोथा: षड़ेते स्यु: संयुक्ता: शोथलक्षणै: ॥" मा.नि. । [वै.निघ. ।

**व्रणशोधन:** । पुं । कम्पिल्लके । কমলাগুঁড়ি ।

**व्रणशोष:** । पुं । क्षतजन्यशोषरोगे । निदानं—"रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् । व्रणितस्य भवेच्छोषो स चासाध्यतमो मत: ॥" मा.नि. ।

**व्रणस्थानम्** । क्ली । व्रणवस्तुनि । ব্রণ স্থান ।

तानि च त्वङ्मांसशिरास्नायुस्थिसन्धिकोष्ठमर्म्माण्यष्ट भवन्ति । सु.सू.२२अ. ।

**व्रणहा:** । पुं । एरण्डवृक्षे । श्र.च. । स्त्री (हा) । गुडूच्याम् । श्र.र. । [शूलिया । वै.निघ. ।

**व्रणहरी** । स्त्री । लाङ्गलिकौषधौ । विषला-

**व्रणहृत्** । पुं । भल्लातकवृक्षे । ভেলা গাছ । कलिकारीवृक्षे । विषलाङ्गुलिया । रा.नि.व.४ ।

**व्रणायाम:** । पुं । वातव्याधिविशेषे । लक्षणं —"मर्म्माश्रितं व्रणं प्राप्य वायुर्य: सर्व्वदेहग: । वेगैरानामयेद्देहं व्रणायामस्तु तं त्यजेत् ॥" मा.नि. ।

**व्रणारि:** । पुं । बोलनामगन्धद्रव्ये । गन्धबोल । रा.नि.व.६ । अगस्तिवृक्षे । বাসনা গাছ । रा. नि.व.१० ।

**व्रणोपक्रम:** । पुं । व्रणचिकित्सायाम् । व्रणोपक्रम: षष्टिविधोऽपतर्पणादिभेदेन । यथा—अपतर्पणमालेप: परिषेकोऽभ्यङ्ग: स्वेदो विम्लापनमुपनाह: पाचनं विस्रावनं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावनं सीवनं सन्धानं पीड़नं शोणितास्थापनं निर्व्वापणमुत्कारिका कषायो वर्त्ति: कल्क: सर्पिस्तैलं रसक्रियावचूर्णनं व्रणधूपनमुत्सादनमवगाहनं मृदुकर्म्म दारुणकर्म्म क्षारकर्म्माग्निकर्म्म कृष्णकर्म्म पाण्डुकर्म्म प्रतिसारणं रोमसंजननं लोमापहरणं वस्तिकर्म्मोत्तरवस्तिकर्म्म बन्ध: पत्रदानं क्रिमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधुसर्पिर्यन्त्रमाहारो रक्षाविधानञ्चेति । सु. चि.१अ. ।

**व्रतम्** । क्ली । ईप्सिताकामनियमे । च.सू.१अ. ।

**व्रतति: (ती)** । स्त्री । लतायाम् । अम. ।

**व्रतादेश:** । पुं । उपनयने । स्मृति: ।

**व्रश्चनम्** । क्ली । छेदने । पुं । स्वर्णादिच्छेदके अस्त्रे । ছেনী । अम. ।

**व्रह्मा** (न्) । पुं । विधातरि । तत्प्रादुर्भाव: यथा —"विधाताथर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन् । स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम् ॥" इत्यादि । भा. ।

**व्रीड़ा** । स्त्री । वनकुलत्थिकायाम् । प.मु. ।

**व्रीहि:** । पुं । प्रावृट्कालजातधान्ये । आशु

धान्ये । हैमन्तिकशूकधान्यमात्रे च । मे. । तस्य लक्षणम्—"वार्षिकाः कथिताः शुक्ला व्रीहयश्चिरपाकिनः ।" तद्भेदाः—"कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि । शालामुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ॥" गुणाः—"व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः । अल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः समाः । कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे ॥" भा.पू.१भ.धा.व. । "मधुराम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।" च.सू.२७अ. । गौरः मधुरः शीतलः पित्तघ्नः कषायः स्निग्धो हृद्यः कृमिकफहरः तापरक्तहरश्च । तथा पुष्टिकरः श्रमघ्नः वीर्य्यवृद्धिकरी रुच्य आनन्दजनको वातजनकश्च । रा.नि.व.१६ ।

**व्रीहिकाञ्चनः** । पुं । मसूरवृक्षे । त्रिका. ।

**व्रीहितुण्डिका** । स्त्री । देवधान्ये । দেধান। वै.निघ. ।

**व्रीहिधान्यम्** । क्ली । षष्टिकादिधान्ये । वै.निघ. ।

**व्रीहिपर्णिका (र्णी)** । स्त्री । शालपर्ण्याम्। শালপাণি । रा.नि.व.४ । [र.मा. ।

**व्रीहिभेदः** । पुं । चीनाकधान्ये । কাংনীধান।

**व्रीहिमुखम्** । क्ली । व्यधनार्थं व्रीहिमुखाकारमुखशस्त्रे । सु.सू.८अ. । तत् षडङ्गुलायतं शङ्कुलवृन्तं चतुरङ्गुलफलञ्च कार्य्यम्, तन्मुखञ्च व्रीहिविस्तारं संमूढकुण्डञ्च कार्य्यम् । इति सु.टी.ड. भोजः । [धान्ये । কাংনী ধান । मे. ।

**व्रीहिराजिकः** । पुं । चीनाकधान्ये, बहु-

**व्रीहिश्रेष्ठः** । पुं । शालिधान्ये । হেমন্তধান। रा.नि.व.१६ ।

**व्रीह्यास्यम्** । क्ली । व्रीहिमुखास्त्रभेदे । च.द. ।

---

# श

**शंवः** । पुं । मुषलाग्रस्थलौहमण्डले । লোহার গুলো। धरणिः ।

**शंवरम्** । क्ली । जले । अम. । रा.नि.व.१४ ।

**शकटः** । पुं, स्त्री । धववृक्षे । ধাওয়া গাছ । म.मु. । शरीरे । वै.निघ. । तिनिशवृक्षे । रा.नि.व.९ । [গাছ । र.मा. ।

**शकटाख्यः (कः)** । पुं । धववृक्षे । ধাওয়া

**शकलम्** । क्ली । त्वचि । গুড়ত্বক্ । रा.नि.व.६ । आमलके । पद्मदण्डे । পদ্মের ডাঁটা। वै.निघ. । वल्कले । ছাল । त्रिका. । शल्के । আঁইশ । पुं, क्ली । खण्डे । अंशे । अम. ।

**शक(कु)ली (न्)** । स्त्री, पुं । स्थालमत्स्ये । মিরগাল মাছ । अम.भ. । गुणाः—वातकफकरत्वम् । अत्रि.२३अ. । महाशकुलमत्स्य । বড় শউল, পিপ্লেগোউল । गुणाः—"शकुली रोहिताकारा भूमौ मायचरत्यसौ । गुर्वी पाके च मधुरा मेदिनी दोषकोपनी ॥" राज.३प. ।

**शकुनः** । पुं । पक्षिणि । गृध्रे । শকুনি । मे. । कृष्णचटके । শ্যামা পাখী । वै.निघ. । क्ली । शुभसूचकनिमित्ते । সগুন্ । मे. ।

**शकुनग्रहा** । स्त्री । क्षुद्रगृहगोधिकायाम् । क्षुद्र টিক্‌টিকি । त्रिका. ।

**शकुनाहृत: (त)** । पुं । बालरोगविशेषे । शकुनिग्रह । मत्स्यविशेषे । वै.निघ. । शालिधान्यभेदे । भा.पू.१भ.धा.व. । गुणाः—शालिवत् ।

**शकुनिः** । पुं । पक्षिणि । প[illegible] । अम. । कृष्णचटके । শ্যামা পাখী । [illegible] । रा.नि.व.१९ । चिल्लपक्षिणि । চীল পাখী । हे.च. । [हारा. ।

**शकुनिप्रपा** । स्त्री । पक्षिपानीयशालायां ।

**शकुनी** । स्त्री । तन्नामकबालग्रहविशेषे । लक्षणं—"स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्राविव्रणपरिपीडितः समन्तात् । स्फोटैश्च प्रततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥" सु.उ.२७अ. । श्यामाकपक्षिणि । শ্যামা পাখী । रा.नि.व.१९ ।

**शकुन्तः (न्तिः)** । पुं । पक्षिणि । अम. । काकभेदे । कुकुटभेदे । वै.निघ. । भासपक्षिणि । उणा. । कीटविशेषे । मे. ।

**शकुन्दः** । पुं । श्वेतकरवीरे । रा.नि.व.१० ।

**शकुल:** । पुं । मत्स्यविशेषे । শল মাছ । गुणा: “शकुलो मधुरो ग्राही रुच: पित्तास्रजिद्गुरु: ।” राज.१प. । [त्रिका. ।

**शकुलगण्ड:** । पुं । मत्स्यविशेषे । শাল মাছ ।

**शकुला** । स्त्री । कटुक्याम् । কট্‌কী । रा.नि. व.६ ।

**शकुलादनी** । स्त्री । कटुक्यां । কট্‌কী । रा.नि.व.६ । च.सू.४अ.भेदनीये । जलपिप्पल्यां, कच्छटशाके । কাচড়াদাম । र.मा. । गजपिप्पल्याम् । रा.नि.व.६ । गण्डदूर्व्वादाम् । जटामांस्यां । गण्डूपदे । কেঁচো । कट्फले । विश्व: ।

**शकुलार्भक:** । पुं । गडकमत्स्ये । গরুই মাছ । अम. ।

**शकुलाक्षक: (का)** । पुं, स्त्री । श्वेतदूर्व्वायाम् । गण्डदूर्व्वायाम् । अम. । [व.८ ।

**शकुलाक्षी** । स्त्री । गण्डदूर्व्वायाम् । रा.नि.

**शकृत्** । क्ली । विष्ठायाम् । अम. ।

**शकृत्करि: (री)** । पुं, स्त्री । गोवत्से । त्रिका. ।

**शकृत्कार:** । पुं । मलत्यागकारके । व्याक. ।

**शकृद्द्वारम्** । क्ली । मलद्वारे । हे.च. ।

**शकृद्भव:** । त्रि । द्रवरूपे । भा.म.४भ.तालुकण्टकचि. । [सु.सू.२६अ. ।

**शकृद्रस:** । पुं । गोमयरसे । গোবরের রস ।

**शक्कर: (रि:)** । पुं । वृषे । हे.च. । त्रिका. ।

**शक्तव:** । पुं । भृष्टयवादिचूर्णे । ছাতু ।

**शक्तिक:** । पुं । गन्धके । रस.र. रस.कौ. भैष. वादशायसे । [जटा. ।

**शक्तिपर्ण:** । पुं । सप्तपर्णवृक्षे । ছাতিম গাছ ।

**शक्तु:** । पुं, क्ली । भर्जितयवादिचूर्णे । ছাতু । “धान्यानि भाष्ट्रभृष्टानि यवे .... ।” रा.नि.व. १६ । “यन्त्रपिष्टानि शक्तव: ।” भा. । “धाना भृष्टयवे भूम्नि स्त्रियां पुंभूम्नि शक्तव: ।” जटा. ।

**शक्तुक:** । पुं । तन्नामकविषभेदे । लक्षणं यथा —“यद्ग्रन्थि: शक्तुकेनैव पूर्णमध्य: स शक्तुक: ।” भा.पू.१भ.विष.व. । क्ली । शक्तौ ছাতু । सा. कौ. ।

**शक्तुपिण्डी** । स्त्री । शक्तुकृतपिण्डाकारभोज्यद्रव्ये । ছাতুর লাড়ু । गुणा:—“गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात् ।” राज.१प. ।

**शक्तुफला (ली)** । स्त्री । शमीवृक्षे । শাঁই গাছ । अम. । श.र. ।

**शक्त्ववलेहिका** । स्त्री । शक्तुकृतावलेहिकायाम् । ছাতুর অবলেহ । गुणा:—“शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ।” राज.१प. ।

**शक्र: (क:)** । पुं । कुटजवृक्षे । কুড়চি গাছ । प.मु. । च.द.मेह.चि.न्यग्रोधाद्यचूर्णे । रस.र.कच्छटावलेहे । अर्ज्जुनवृक्षे । मे. । इन्द्रयवे । भैष.च.द.बालरो.चि. । [পোকা । जटा. ।

**शक्रगोप:** । पुं । इन्द्रगोपकीटे । আষাঢ়ে

**शक्रचापसमुद्भवा** । स्त्री । बलाव्याम् । वै. निघ. । [श.र. ।

**शक्रज: (जात:)** । पुं । काके । त्रिका. ।

**शक्रजा** । स्त्री । इन्द्रवारुण्याम् । রাখালশসা । सु.चि.३८अ. । [वै.निघ. ।

**शक्रदारु:** । पुं । शालवृक्षे । तैलदेवदारुवृक्षे ।

**शक्रद्रुम:** । पुं । बकुलवृक्षे । भा.म.१भ.ज्वरोपद्रवचि.द्वात्रिंशत्क्वाथे । “श्योणाकशक्रद्रुमै. ।” तैलदेवदारौ । भा. ।

**शक्रनेमी** । स्त्री । कृष्णमेषशृङ्ग्याम् । शक्रकुटजवृक्षे । देवदारुवृक्षे । वै.निघ. । [प.मु. ।

**शक्रपर्य्याय:** । पुं । कुटजवृक्षे । কুড়চিগাছ ।

**शक्रपादप:** । पुं । कुटजवृक्षे । কুড়চি গাছ । रा.नि.व.९ । देवदारुवृक्षे । अम. ।

**शक्रपुष्पम्** । क्ली । इन्द्रयवे । वै.निघ.जीर्णज्व.चि.लवङ्गादिकषाये ।

**शक्रपुष्पा (ष्पी)** । स्त्री । नागदमन्यां । নাগদনা । र.मा. । लाङ्गलीवृक्षे । বিষলাঙ্গুলিয়া । अम. । [লাঙ্গুলিয়া । र.मा. ।

**शक्रपुष्पिका** । स्त्री । अग्निशिखावृक्षे । विश्व-

**शक्रबीजम्** । क्ली । इन्द्रयवे । रा.नि.व.९ ।

**शक्रभूभवा** । स्त्री । इन्द्रवारुण्याम् । রাখালশসা । श.च. ।

**अङ्कभूरुह:** । पुं । कुटजवृक्षे । कुड़चि गाछ । वै.निघ. । [रा.नि.व.६ ।

**अङ्कमाता** । स्त्री । भार्य्याम् । वामनहाटी ।

**अङ्कमूर्द्धा (न्)** । पुं । वल्मीके । त्रिका. ।

**अङ्कयव:** । पुं । इन्द्रयवे । वै.निघ.२भ.अ.सा. चि. । भैष.बालरी.चि. ।

**अङ्कवल्ली** । स्त्री । इन्द्रवारुणीलतायाम् । राखालशशा । रा.नि.व.३ ।

**अङ्कशाखी (इन्)** । पुं । कुटजवृक्षे । भा. ।

**अङ्कशिरा:** । पुं । वल्मीके । रा.नि.व.१३ ।

**अङ्कसुधा** । स्त्री । कुन्दुरुखोटी । सरलेर आठा । अ.च. ।

**अङ्कस्रष्टा** । स्त्री । हरीतक्याम् । त्रिका. ।

**अङ्काख्य:** । पुं । उलूके, पेचके । त्रिका. ।

**अङ्काशनम्** । क्ली । भङ्गायाम् । भाङ्,सिद्धि । गुणा:—"अङ्काशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम् । बलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥" राज. । पुं । विजयावृक्षे । सिद्धि गाछ । प.मु. । कुटजवृक्षे । कुड़चि गाछ । अ.च. । इन्द्रयवे । वै.निघ.२भ.दुर्जलज्व.चि.ज्ञानोदयरसे ।

**अङ्काह्व:** । पुं । इन्द्रयवे । रा.नि.व.६ । भा.म. १भ.सन्ततादिज्व.चि. । "अङ्काह्वत्रिफलाशतम् ।" स्त्री (ह्वा) । इन्द्रयवे । वा.उ.५७अ भूतरावघृते ।

**अङ्केन्द्र:** । पुं । इन्द्रगोपकीटे । आषाढ़े पोका । वै.निघ.२भ.अर्श:चि.त्रिफलागुग्गुलौ ।

**अङ्करी** । स्त्री । अङ्गुल्यां । आङ्गुल । उणा. ।

**अङ्का (न्)** । पुं । गजे । उणा. ।

**अङ्कर:** । पुं । श्वेतार्के । श्वेत आकन्द । भीमसेनीकर्पूरे । कर्पोते । वै.निघ. । वैद्यविनोदग्रन्थकारे । नाड़ीपरीक्षाकारे ।

**अङ्करप्रिय:** । पुं । द्रोणपुष्प्याम् । घलघसा । प.मु. । तित्तिरिपक्षिणि । शब्दकल्पद्रुम: ।

**अङ्करमत(लौह)म्** । क्ली । अर्शसि लौहम् । भा. । रस.धि.८अ. । [तरौ ।

**अङ्करशुक्रम्** । क्ली । पारदे । भा.ज्व.चि.कल्प-

**अङ्करस्वेद:** । पुं । आमवाते स्वेदविशेषे । "कार्पासास्थिकुलत्थिकातिलयवैरेरण्डमूलातसीवर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् स्वेद: स्यात्......... ॥" भैष. । "शङ्कता महिषाश्वानां गोमयेन तथैव च । अग्नितप्तेन य: स्वेद: अङ्करस्वेद उच्यते ॥" ज.द.१८अ. ।

**अङ्करा (री)** । स्त्री । शमीवृक्षे । शाँइ गाछ । रा.नि.व.८ । मञ्जिष्ठायाम् । श.र. ।

**अङ्करादि:** । पुं । शुक्लार्कवृक्षे । श्वेत आकन्द । रा.नि.व.१० । [व.१२ ।

**अङ्करावास:** । पुं । भीमसेनीकर्पूरे । रा.नि.

**अङ्कराह्वया** । स्त्री । ऊस्वशमीवृक्षे । वै.निघ. ।

**अङ्कित:** । पुं । चौरकनामगन्धद्रव्ये । हिं चौरा । गेटेला । रा.नि.व.१२ ।

**अङ्कु:** । पुं । मत्स्यविशेषे जलजन्तुविशेषे । शाँकोच इति भाषा । अर्क.चि.४र्थ शतके । अस्त्र । कीलके । मे. । पञ्चशिराजाले । पाताल शिर । मेढ्रे । हे.च. । नखीनामगन्धद्रव्ये । नखी । जटा. ।

**अङ्कुकर्ण:** । पुं । गर्द्दभे । त्रिका. ।

**अङ्कुचि:** । पुं । मत्स्यविशेषे । शङ्कु माछ । श.र. ।

**अङ्कुतरु: (वृक्ष:)** । पुं । शालवृक्षे । श.र. । र.मा. ।

**अङ्कुफलिका (फली)** । स्त्री । ऊस्वशमीवृक्षे । छोट शाँइ गाछ । रा.नि.व.८ ।

**अङ्कुमुखी** । स्त्री । निर्विषजलौकायाम् । निर्विष जोँक । सु.सू.१३अ. See जलायुका ।

**अङ्कुला** । स्त्री । यन्त्रिकायाम् । जाँति । अन्दकन्य: । उत्पलपत्रायाम् । उणा. ।

**अङ्काच: (चि:)** । पुं । मत्स्यविशेषे । शाँकोच माछ । जटा. । श.र. ।

**अङ्क:** । पुं, क्ली । तन्नामकस्थावरविषभेदे । स अतिविषासदृश: । शङ्कीविषे, दारुमोचभेदे वा । सेँको, दामूंज । अचि.३स्थान.५६अ. । सामुद्रकोषस्थजन्तुविशेषे । शाँक । गुणा:—"शङ्ककूर्म्मादय: स्वादुरसपाका मरुन्नुद: । शीता: स्निग्धा हिता: पित्ते वर्च्चस्या: श्लेष्मवर्द्धना: ॥" सु.सू.४६ अ. । कटु: शीत: पुष्टिवीर्य्यबलद: गुल्मशूलकफश्वासविषघ्नश्च । रा.नि.व.१६ । "कङ्कुष्ठं गैरिकं

शङ्खं कासीसं टङ्कणमथा। नीलाञ्जनं शुक्तिभेदाः चुल्लकाः सवराटिकाः। जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा। शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये।" इति शङ्खादिशुद्धिः। सा.कौ.। शङ्खनाभौ। শঙ্খনাভি। र.सा.सं.प्रदरान्तकरसे। नखीनामगन्धद्रव्ये। नखी। रा.नि.व.१२। च.द.ज्वरातिसा.चि.कलिङ्गाद्यगुड़िकायाम्। कर्णसमीपदेशे। रा.नि.व.१८। भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये मर्म्मद्वये। तच्च सद्योमारकम्। सु.शा.६अ.।

**शङ्खकः**। पुं। शङ्खे। শাঁক। मे.। नीलकाशोषे। নীল হিরাকস। वै.निघ.। शिरोरोगभेदे। तस्य लक्षणं—"रक्तपित्तानिलाः दुष्टाः शङ्खदेशे विमूर्च्छिताः। तीव्ररुग्दाहरागं हि शोथं कुर्व्वन्ति दारुणं। स शिरो विषवद्वेगी निरुध्याशु गलं तथा। त्रिरात्राज्जीवितं हन्ति......॥" मा.नि.। च.इन्द्रिय.८अ.। [सु.।

**शङ्खकान्दः**। पुं। शङ्खालौ। শাঁক আলু। प.

**शङ्खकुसुमा**। स्त्री। शङ्खपुष्प्याम्। শ্বেত অপরাজিতা। रा.नि.व.३। [त्रिका.। श.र.।

**शङ्खचरी (चर्च्ची)**। स्त्री। ललाटिकायां।

**शङ्खचूर्णम्**। क्ली। शङ्खभस्मकृतचूर्णे। শাঁকের চুণ। गुणाः—पटु क्षारम् उष्णं परं क्रमिघ्नञ्च। राज.३प.। See चूर्णम्।

**शङ्खजः**। पुं। पारावताण्डाकारस्थूलमौक्तिके। বড় শঙ্খমুক্তা। शब्दकल्पः।

**शङ्खद्रावकः**। पुं। शौह्ययकृदधिकारे। শঙ্খদ্রাবক। शङ्खादिद्रव्यसङ्करजातद्रावकौषधे। पाठः—शङ्खचूर्णं यवक्षारं सर्ज्जिक्षारं टङ्कणं विट् सैन्धवं सौवर्चलं शाम्भरि कर्कचं फटिकारीं नृसारदं समभागं काचकूप्यां निधाय वारुणीयन्त्रेण साधयेत्। भैष.। [रा.नि.व.६।

**शङ्खद्रावी (न्)**। पुं। अम्लवेतसे। অম্ল বেতস।

**शङ्खधरा**। स्त्री। हिलमोचिकायाम्। হিঞ্চে। भा.पू.१भ.शा.व.। [जूई। वै.निघ.।

**शङ्खधवला**। स्त्री। शुक्लयूथिकायाम्। শ্বেত

**शङ्खनखः**। पुं। क्षुद्रशङ्खे। জোড়ঙ্গা। अम.भ.। नखीभेदे। श.र.। वृहन्नख्यां। र.मा.।

**शङ्खनखा (खी)**। स्त्री। वृहन्नख्याम्। र.मा.।

**शङ्खनाभिः**। स्त्री। सुगन्धद्रव्यविशेषे। শঙ্খনাভি। इयं जम्बीररसेन भाविता शुद्धिमायाति। सा.कौ.। भा.उपदं.।

**शङ्खनाम्नी**। स्त्री। शङ्खपुष्प्याम्। শ্বেত অপরাজিত। वै.निघ.।

**शङ्खपालः**। पुं। स्वनामप्रसिद्धे दर्वीकरमहासर्पे। सु.कल्प.४अ.।

**शङ्खपुष्पिका**। स्त्री। श्वेतयूथिकायाम्। श्वेतापराजितायाम्। শ্বেত জুই, শ্বেত অপরাজিতা। सि.यो.कु.टी.उन्मा.चि.।

**शङ्खपुष्पी**। स्त्री। (Andropogon aciculartum, or Canscora decussata.) लताप्रभेदविशेषे। শঙ্খাহুলুই, ডানকুনী। प.मु. इति केचित् स्वर्णमारणे। श्वेतापराजितायाम्। শ্বেত অপরাজিতা। वम्. शंखोनी। गुणाः—हिमा तिक्ता मेधास्वरकरी ग्रहभूतादिदोषघ्नी च॥ रा.नि.व.३। "शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगहृत्। रसायना कषायोष्णा स्मृतिकान्तिबलाग्निदा। दोषापस्मारभूताखकुष्ठक्रिमिविषप्रणुत्॥" भा.गु.व.। [रा.नि.व.३।

**शङ्खमालिनी**। स्त्री। शङ्खपुष्पीलतायाम्॥

**शङ्खमुखः**। पुं। कुम्भीरे। हे.च.।

**शङ्खमूलम्**। क्ली। श्वेतमूलके। হাঁসা মূলা। रा.नि.व.७। [वै.निघ.।

**शङ्खयूथिका**। स्त्री। शुक्लयूथ्यां। শ্বেত জুই।

**शङ्खवटी**। स्त्री। अग्निमान्द्ये शूलाधिकारे च हिता वटी। पाठः—"चिञ्चाक्षारपलं पटुव्रजपलं निम्बूरसे कल्कितं तस्मिन् शङ्खपलं सुतप्तमसकृन्निर्वाप्य शीर्णावधि। हिङ्गुत्र्यूषपलं रसामृतबलीन्निक्षिप्य निष्कांशिकान् बद्धा शङ्खवटी क्षयग्रहणिकारुकपङ्क्तिशूलादिषु।" যাবৎ চুর্ণ হইয়া না যায়, তাবৎ শঙ্খকে বারংবার পোড়াইয়া লেবুর রসে ফেলিবে, চূর্ণবৎ হইলে তুলিবে। তেঁতুলক্ষার ৮ তো. পঞ্চলবণ মিলিত ৮ তো. উক্ত শঙ্খচূর্ণ ৮ তো. হিঙ্গু, শুট, পিপুল ও মরিচ মিলিত ৮ তো. পারা, বিষ ও গন্ধক প্রত্যেকে অর্দ্ধ তোলা একত্র লেবুর রসে

মাড়িয়া মাড়িয়া অম্ল রস হইলে বটি করি-বে। रस.चि.। भैष.।

**शङ्खविषम्** । क्ली। (Arsenicum album.) White arsenic. विषभेदे। সেঁকো। हिं दा. सान्खबार सनुखुलखार, संखिया। तैं तेलपाषाषम्। ता.वैल्लपाषाषम्। [वै.निघ.।

**शङ्खसहाय:** । पुं। शङ्खालौ। শাঁক আলু।

**शङ्खाख्य:** । पुं। शङ्खनखे। বড়নখী। र.मा.।

**शङ्खालु: (क:)** । पुं। श्वेतालौ। শাঁক আলু। वै.निघ.।

**शङ्खावर्त्त:** । पुं। शम्बूकावर्त्तनामभगन्दररोगे। See शम्बूकावर्त्त:। श्रोत्रशङ्खाटकेषु तन्नामका-स्थिसन्धिभेदे। सु.शा.५अ.।

**शङ्खास्थि** । क्ली। मस्तकस्यास्थिद्वये। মাথার খুলি। च.शा.७अ.। पृष्ठास्थनि। रा.नि.व.१८।

**शङ्खाहुली** । स्त्री। शङ्खपुष्प्याम्। শ্বেত অপ-রাজিতা। रा.नि.व.३।

**शङ्खाह्वया (ह्वा)** । स्त्री। शङ्खपुष्पीलतायाम्। শ্বেত অপরাজিতা। रा.नि.व.३। वै.निघ.२भ. छर्दि.चि.धान्यकयूषे। [श.च.।

**शङ्खिका** । स्त्री। चोरपुष्प्यां। চোরহুলী।

**शङ्खिन:** । पुं। श्रिदीवृक्षे। वै.निघ.।

**शङ्खिनिका** । स्त्री। ग्रन्थिपर्णवृक्षे। গেঁঠেলা। वै.निघ.।

**शङ्खिनी** । स्त्री। चोरपुष्प्यां। চোরহুলী, ভাঁটুই इति पूर्ववङ्गे। प्रयोगोविन्दपृष्ठे। "क्रमु-ककुटजपाशङ्खिनीचर्म्मपाठा।" यवतिक्तायां। श्वे-तबुह्मायां। रा.नि.व.३। प.मु.। सु.सू.३८अ.। च. सू.४अ.। वा.सू.१५अ.। चर्म्मकषायां। চামরক-ষা। च.द.परिणामशूले। "समला शङ्खिनी श्वे-ता।" श्वेतापराजितायां। वै.निघ.। शुक्लपुन्नाग वृक्षे। विश्व:। श्वेतचुकायां। শ্বেত চুকা। श.र.।

**शङ्खिनीफल:** । पुं। श्रिदीषवृक्षे। रा.नि.व.८।

**शङ्खिनीवास:** । पुं। शाखोटवृक्षे। শ্যাওড়া গাছ। श.च.।

**शङ्खोदधिमल:** । पुं। समुद्रफेने। वै.निघ.।

**शङ्खोदरी** । स्त्री। तृणादिभेदे। वम्. गुल-तुरा। गुणा:—उष्णा कफवातघ्नी शूलामवातघ्नी च। वै.निघ.।

**शची** । स्त्री। स्पृक्कायाम्। পিড়িং। वै.निघ.। शतावर्य्यां। শতমূলী। मे:।

**शट:** । त्रि। अम्लरसे। व्याक.।

**शटि: (टी)** । स्त्री। शट्याम्। শঠী, বন আদা। श.र.। च.सू.४अ.।

**शट्टकम्** । क्ली। सघृतजलमिश्रितशालिचूर्णे। সবেদার শটা। "शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं भवेत्।"

**शठम्** । क्ली। तीक्ष्णलौहे। रा.नि.व.१३। तग-रपुष्पे, तगरपादिके। তগরপাদিকা। रा.नि.व. १०। कुङ्कुमे। रा.नि.व.१२। पुं। धुस्तूरवृक्षे। रा.नि.व.२३। चित्रकवृक्षे। तालवृक्षे। स्त्री। आम्रातकवृक्षे। वै.निघ.। [नि.व.।

**शठाङ्गा (ख्या)** । स्त्री। अम्बष्ठायाम्। रा.

**शठिका (ठी)** । स्त्री। (Curcuma zedoaria. Syn. Curcuma zerumbet.) Long and round zedoary. स्वनाम-ख्यातमूले। गन्धशटीति च लोके। শটী। हिं कचूर। वम्. कचोरा, कापुरकाचरी। तैं कि चलिएगद्दल। गुणा:—वातकफश्वासकासज्वरवि नाशिनी। राज.। "सुगन्धि: कटुपाका क्षा कुष्ठार्शोव्रणनाशनम्। उष्णा लघुश्च.........भा.। "शठी तिक्ता च कटुका कोष्णा तीक्ष्णा त्रिदीपनी। सुगन्धी रुचिरा लघ्वी मुखवैशद्यकरी मता। कोपनी रक्तपित्तस्य गुल्मश्वासहिंसाघ्नी कुष्ठार्शोव्रणकासघ्नी श्वासगुल्मकफापहा। त्रिदोषक्रमिवातानां ज्वराणां च हितामता।" वै.निघ. See कर्चूर:। आरण्यकार्द्रके। ......च.द.कफज्व.चि.निम्बादि। "शठीभूनिम्बपौष्करम्।" च.द.ज्व.चि.किराततिक्तादौ। भा.म.१ काष्ठकूलज्व.चि.। "शठीकलिङ्गकलिमाभया:।

**शठीरूपा** । स्त्री। चान्द्रगुडूच्याम्। वै.निघ.

**शठ्यादि:** । पुं। त्रिदोषज्वरे कषायविशेष: "शठीपुष्करमूलञ्च भार्गी शृङ्गी दुरालभा। गुडू नागरं पाठा किरातं कटुरोहिणी।" च.द.ज्व.त्रि

**शण:** । पुं। (Crotalaria juncea.) In

dian hemp. स्वनामख्यातक्षुपे। शण गाछ। हिं शण। तें शणमनुबेल्ल, जिनपनर, रैम्रचेट्ट। ता. जिनपनर। दा. अनवकनर। प.मु.। गुणाः —अम्लः कषायी मलगर्भास्रपातनः वान्तिकृत् वातकफघ्नश्च। रा.नि.व.४। तत्पुष्पं रक्तपित्ते हितं मलरोधकच। बीजं शोणितशुद्धिकरम्। राज.३प.। क्ली। शणे। हे.च.।

**शणकन्दः।** पुं। चर्म्मकषायां। चामर कषा। रस.र.ग्रद.चि.वह्निभल्लातकरसे।

**शणघण्टा (घटिका)।** स्त्री। शणपुष्प्याम्। वन शणई। रा.नि.व.४।

**शणपर्णी।** स्त्री। अशनपर्ण्याम्। रइर। श.र.।

**शणपुष्पिका।** स्त्री। शणपुष्प्यां। आढ़क्याम्। रहर। भा.पू.१भ.धा.व.।

**शणपुष्पी।** स्त्री। शणसदृशविटपे क्षुपे, मञ्जाशणे। झन्झनिया, वन शण। हिं घागरी, शणइ, वनशणइ। शणहुली। सु.सू.३९श संशोधने। च.सू.१।४श.। गुणाः—कषाया कफवातघ्नी अजीर्णज्वरघ्नी वामनी रक्तदोषघ्नी च। रा.नि.व.४। जवाङ्गचे। र.मा.। [श.।

**शणमूलम्।** क्ली। शणशिफायाम्। सु.सू.३६

**शणालः (लुकः)।** पुं। आरग्वधवृक्षे। शोणालु गाछ। श.र.। [रा.नि.व.४।

**शणिका।** स्त्री। शणपुष्प्याम्। वन शण,

**शण्डम्।** क्ली। पद्मिन्याम्। श.र.। पुं। नपुंसके। अम.।

**शण्ढः।** पुं। क्लीवे। हिजड़े। अ.टी.भ.। वन्ध्यवृषे। वाटा। चन्दनंङ्गल्लिके। थोजा। अम.।

**शतकुन्दः।** पुं। करवीरे। "शतकुन्दः करवीरे।" रा.नि.व.२३।

**शतकुलीरकः।** पुं। वायव्यकीटविशेषे। सु.कल्प.८श.। See कीटः। [च.सिद्धिः।

**शतकुसुमा।** स्त्री। शतपुष्पायाम्। शुल्फा।

**शतकोटि।** क्ली। हीरके। रा.नि.व.१३। See वज्रम्।

**शतकौम्भ(क)म्।** क्ली। स्वर्णे। वै.निघ।

**शतक्रतुद्रुमः।** पुं। कृष्णकुटजवृक्षे। वै.निघ.।

**शतक्रतुयवः।** पुं। इन्द्रयवे। वै.निघ.।

**शतखण्डम्।** क्ली। सुवर्णे। श.च.।

**शतग्रन्थिः।** स्त्री। दूर्व्वायाम्। नीलदूर्व्वायाम्। रा.नि.व.८।

**शतघ्नी।** स्त्री। वृश्चिकाल्याम्। विछाती। करञ्जवृक्षे। मे। गलरोगविशेषे। लक्षणं यथा— "वर्त्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पिशितप्ररोहैः। नानारुजोच्छ्रायकरी त्रिदोषाज्ज्ञेया शतघ्नीव शतघ्न्यसाध्या॥" सु.नि.१६श.।

**शतच्छदः।** पुं। काष्ठकुट्टपक्षिणि। काठठोकरा पाखी। त्रिका.।

**शतजटा।** स्त्री। शतमूल्याम्। चि.क्र.क.।

**शतदन्तिका।** स्त्री। नागदन्त्याम्। हातिशुँड़े। रा.नि.व.५।

**शतदलमल्लिका।** स्त्री। स्वनामख्यातपुष्पक्षुपे। शतदलमल्लिका। प.मु.।

**शतदला।** स्त्री। शतपत्रीपुष्पवृक्षे। सेउति, गोलाप। रा.नि.व.१०।

**शतद्रुः।** स्त्री। नदीविशेषे। तज्जलं शीतलं लघु स्वादु सर्व्वरोगहरं निर्म्मलं दीपनं पाचनं बुद्धिमेधाबलकरञ्च। रा.नि.व.१४।

**शतधा।** स्त्री। दूर्व्वायाम्। श.च.।

**शतधौतघृतम्।** क्ली। यत् पुनः पुनः सन्ताप्य शीताम्भसा निर्वाप्यते तथाविधसर्पिषि। शतधोत घि। ईशानदेवः। "शतं वारान् शीततोयेन धौतं फेणितं घृतम्।" डल्लणः। सि.यो.दाहचि.। [रा.नि.व.४।

**शतनेत्रिका।** स्त्री। शतावर्य्याम्। शतमूली।

**शतपत्रम्।** क्ली। कमले। पुष्पभेदे। रा.नि.व.२३। वा.उ.११श.। शतदलकमले। रक्तपद्मे। वा च.सू.४श.।

**शतपत्रः (कः)।** पुं। मयूरे। मे.। राजशुके। कुरौ पाखी। अयं प्रतुदजातीयः। रा.नि.व.२३। हे.च.। सु.सू.४६श.। (कः) काष्ठकुट्टकपक्षिणि। अम.। च.सू.२७श.। सारसपक्षिणि। मे.।

**शतपत्रा (त्रिका, त्री)** । स्त्री । शतदलम-
ल्लिकायाम् । শ্বেত বা পাটলবর্ণ গোলাপ । हिं
सेवती, गुलाब । मं सेवती । कं सेवतिगे । तें
चेमन्तिचेट्टु । गुणाः—शीतला तिक्ता कषाया कु-
ष्ठघ्नी मुखस्फोटहरा कफपित्तदाहघ्नी च । रा.
नि.व.१० । "शतपत्री हिमा हृद्या ग्राहिणी शुक्र-
ला लघुः । दोषत्रयास्रजिद् वर्ण्या तिक्ता कट्वी च
पाचनी ॥" भा. । नीलदूर्व्वायाम् । रा.नि.व.८ ।

**शतपदी** । स्त्री । शतमूल्याम् । শতমূলী ।
रा.नि.व.४ । कर्णजलौकायाम् । কাণবিছা,
কাণকোটারি । हिं खान् खजूरा । वै.श. ।
सा चाष्टधा—परुषा कृष्णा चित्रा कपिलिका पि-
तिका रक्ता श्वेता अग्निप्रभा चेति । ताभिः दष्टे
शोफो वेदना दाहश्च हृदये भवति । सु.कल्प.८ अ. ।

**शतपद्मम्** । क्ली । श्वेतकमले । र.मा. ।

**शतपर्व्वा(न्)(र्व्विका)** । पुं, स्त्री । वंशे । বাঁশ ।
रा.नि.व.७ । च.द.अश्म.चि.वरुणाद्यघृते । (र्व्विका)
यवे । श.र. । शतपोरनाम्नि इक्षुभेदे । हिं शत-
पोरक । गुणाः—"शतपर्व्वा भवेत्किञ्चित्कोशकका-
रगुणान्वितः । विशेषात्किञ्चिदुष्णश्च सक्षारः पव-
नापहः ॥" भा. । स्त्री (र्व्वा, र्व्विका) । दूर्व्वा-
याम् । वचायाम् । বচ । मे. । श्वेतदूर्व्वायाम् । प्रयो-
ग. । श्वेतदूर्व्वायाम् । प.मु. । च.चि.३ अ. । कटु-
कायाम् । কটকী । रा.नि.व.६ । नीलदूर्व्वायाम् ।
रा.नि.व.८ । कलम्बीशाके । भा.पू.१भ.शा.व. ।

**शतपात् (द्)** । स्त्री । शतपद्याम् । কাণকো-
টারী । जटा. । [सु.कल्प.८ अ. ।

**शतपादकः** । पुं । अग्निप्रकृतिकीटविशेषे ।

**शतपादिका** । स्त्री । काकोल्याम् । কাঁক-
লা জটা. । कर्णजलौकायाम् । কাণকোটারী ।
श.र. ।

**शतपादी** । स्त्री । श्वेतकटभीवृक्षे । रा.नि.व.
९ । See कटभी । नीलापराजितायां । वै.निघ. ।

**शतपुत्री** । स्त्री । क्षुद्रशतमूल्याम् । শতমূলী ।
र.सा.सं. । लघुघोषायाम् । ক্ষুদ্র ঘোষা । वै.
निघ. ।

**शतपुष्पः** । पुं । षष्टिकशालिधान्ये । ষেটে ধা-
ন । वै.निघ. । स्त्री (ष्पा, ष्पिका) । (Peuce-
danum Sowa. P. Graveslons.) Drill
seeds. शताह्वायाम् । শুল্ফা । श.र. । रा.नि.
व.४ । हिं सोंया । तें पेद्दसदापचेट्टु । गुणाः—
"शतपुष्पा त्रिदोषघ्नी मेध्या पथ्या रुचिप्रदा ।"
चचि.१६ अ. । "शतपुष्पा तु मधुरा वातपित्तहरा
गुरुः ।" राज.३प. । च.द.वा.ज्व.चि.पिप्पल्यादिः ।
मिश्रिभेदे । মৌরী । गवेधुकायाम् । रा.नि.व.४ ।
सु.सू.३९ अ. । च.सू.४ अ. ।

**शतपुष्पादल(शाक)म्** । क्ली । शताह्वापत्रे ।
শুল্ফা শাক । मं सोउप । कं सब्बसिगे । गुणाः
—मधुरमुष्णं गुल्मशूलघ्नं वातघ्नं दीपनं पित्तहृत्
रुच्यञ्च । रा.नि.व.७ ।

**शतपोदः (कः)** । पुं । शतपोनकनामभगन्द-
रविशेषे । शूकरोगे । कश्चित् ।

**शतपोनकः** । पुं, क्ली । शूकरोगविशेषे । तत्र
मेढ्रसमन्तादणुमुखैश्छिद्रैर्व्याप्तं वातशोणितजं भव-
ति । सु.नि.१४ अ. । वातजन्यभगन्दररोगे । नि-
दानम् —"कषायरूक्षैरतिकोपितोऽनिलस्त्वपानदेशे
पिडकां करोति यां । उपेक्षणात् पाकमुपैति दा-
रुणं रुजा च भिन्नारुणफेनवाहिनी । तत्रागमो
मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ॥"
मा.नि. । "दीर्घ्यतेऽणुमुखैश्छिद्रैः शतपोनकवत्
क्रमात् । अच्छं स्रवत्यजस्रावमजस्रं फेणसंयुतम् ।
शतपोनकसंज्ञोऽयम्...... ॥" वा.उ.२८ अ. ।

**शतपोरकः (पोरः)** । पुं । इक्षुविशेषे । गु-
णाः—वंशकेक्षुवत् ईषत् वातशान्तिकरश्च । सु.
सू.४५ अ. ।

**शतप्रसूना** । स्त्री । शताह्वायाम् । শুল্ফা ।
रा.नि.व.४ ।

**शतप्रासः** । पुं । करवीरवृक्षे । अम. । [८ अ. ।

**शतबाहुः** । पुं । वायव्यकीटविशेषे । सु.कल्प.

**शतभीरुः** । स्त्री । मल्लिकापुष्पवृक्षे । अम. ।

**शतभेदकः (नः)** । पुं । अम्लवेतसे । मद.व.
६ । [आढ़कमाने । अम.भ. ।

**शतमानः** । पुं । कृष्णमले । রূপার খাদ ।

**शतमूला** । स्त्री । नीलदूर्व्वायाम् । रा.नि.व.
८ । महाशतमूल्याम् । শতমূলী । रा.नि.व.४ ।
वचायाम् । रा.नि.व.६ ।

**शतमूलिका** । स्त्री । द्रवन्त्याम् । दन्तीविशेषे । रा.नि.व.५ । महामूषिककर्ण्याम् । बड़ इन्दुरकाणी । वै.निघ. । [रा.नि.व.४ ।

**शतमूली** । स्त्री । शतावर्य्याम् । শতমূলী ।

**शतवल्ली** । स्त्री । काकोल्याम् । কাঁকলা । र.मा. ।

**शतवीर्य्या** । स्त्री । शतमूल्याम् । শতমূলী । द्राक्षायाम् । কিস্মিস্ । रा.नि.व.२३ । महाशतावर्य्याम् । बड़ শতমূলী । रा.नि.व.४ । श्वेतदूर्व्वायां । শ্বেত দূর্বা । र.मा. । दूर्व्वायां । ज.द. ।

**शतवेधी** (इन् ) पुं, क्ली । अम्लवेतसे । रा.नि.व.६ । स्त्री (धी) । चुक्रे । চুকাপালং । भा.पू.१भ.शा.व. । [द्रव्यगुणे ।

**शतस्राकी** । स्त्री। वीपदीवकृते चन्द्रकलानामके

**शतस्राकीटीका** । स्त्री । कृष्णादत्तकृतशतस्राकीटीकायाम् । [री.चि.वरुणाद्यघृते ।

**शतसुता** । स्त्री । शतावर्य्याम् । रस.र.शिरो

**शता** । स्त्री । शतावर्य्याम् । वै.निघ.२भ.ता.व्या.चि.एरण्डपाके । [रा.नि.व.६ ।

**शताङ्गः** । पुं । तिनिशवृक्षे । সাদন, তিনিশ ।

**शताङ्गुलः** । पुं । तालवृक्षे । कश्चित् ।

**शतायुषः** । पुं । मनुष्ये । वै.निघ. ।

**शतारुः**(स्) (रुषी) । क्ली, स्त्री । कुष्ठरोगभेदे । लक्षणं—"रक्तश्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ।" भा.कुष्ठ.चि. ।

**शतावरी** । स्त्री । (Asparagus racemosus, or Asparagus sarmentosus) स्वनामख्यातमधुरवर्गीयमूलविशेषे । শতমূলী । हिं सफेदमुशली, शतावर, छोटीशतावरी । मं सानोकांटेसेव । कं किरियखासड़ि । तें चल्ल, चल्लगड्डलु । बम्. शतावरी । प.सु. । वा.सू.१५अ. वरुणादिः "शतावरीगुडूचीभ्याम् ।" गुणाः—हिमा वृष्या मधुरा पित्तघ्नी कफवातघ्नी तिक्ता मेहघ्नी रसायनी च । क्षुद्रमहाभेदेन द्विधा । गुणाः—"शतावर्यौ हिमे वृष्ये मधुरे पित्तजित्परे । कफवातहरे तिक्ते मेहघ्ने रसायने । शतावरीद्वयं वृष्यं मधुरं पित्तजिद्धिमम् । महती कफवातघ्नी तिक्ता श्रेष्ठा रसायने ॥" रा.नि.व.४ । तथा शुक्रवृद्धिकरत्वात् शुक्रला । च.द. ।

**शतावरीमण्डूरम्** । क्ली । परिणामशूले मण्डूरम् । शुद्धमण्डूरं शतावरीरसः दधि दुग्धं प्र. ८ प. घृतं ४ प. एकत्र पचेत् । पिण्डिवत्तारयेत् । শোধিতমণ্ডূর, শতমূলীর রস, দধি, দুগ্ধ প্রত্যেকে ৮ প. ঘৃত ৪ প. পাক করিবে । वृहत् यथा—त्रिफलाक्वाथशुद्धमण्डूरं ८ प. । पाकार्थं—शतावरीरसः दुग्धं दधि आमलकीरसः प्र. ८ प. घृतं ४ प. । पाकसिद्धौ मुस्तकपिप्पलीजीरकधान्यकहरीतकीत्वक्तेजपत्रैलानां प्र. चूर्णं ४ मा. प्रक्षिप्यालोड्यम् । रस.र. ।

**शताह्वया** । स्त्री । शताह्वायाम् । শুলফা । शतावर्य्याम् । रा.नि.व.४ । वै.निघ.२भ.सर्व्वज्व.चि. आरग्वधादिनिरूहे । मधुरिकायां । মৌরী । रा.नि.व.२३ ।

**शताह्वा** । स्त्री । सुगन्धक्षुपविशेषे । শুলফা গাছ । हिं सोफि । मं सोफ् । कं सब्बसिगे । बम्. बड़ी सोफ । च.द.अजो.चि.चन्दनबलातैले । गुणाः—कटुः तिक्ता स्निग्धा श्लेष्मातिसारघ्नी ज्वरघ्नी नेत्रव्रणघ्नी वस्तिकर्म्मणि हिता च । रा.नि.व.४ । लघ्वी तीक्ष्णा पित्तकृत् दीपनी कटुः उष्णा शूलाक्षिरोगघ्नी च । भा.पू.१भ. । शतमूल्यां । रा.नि.व.४ । वै.निघ.अर्शः चि.लघुचव्यादिघृते, विजयाचूर्णे । अजमोदायां । রাঙ্গুনী । रा.नि.व.२३।

**शताह्वाद्वयम्** । क्ली । शतपुष्पामधुरिकयोः । শুলফা ও মৌরী । च.सू.२अ. । [श.र. ।

**शताची** । स्त्री। शताह्वायां । শুলফা । রাঙী ।

**शत्रम्** । क्ली । वर्त्म । त्रिका. ।

**शत्रिः** (त्रीः) । पुं । गजे । उष्णा. ।

**शत्रुकण्टकः** (का) । पुं, स्त्री । घोण्टायां । শেয়াকুল । रा.नि.व.८ ।

**शत्रुद्रुमः** । पुं । अम्लवेतसे । कश्चित् ।

**शत्रुभङ्गः** । पुं । मुञ्जतृणे । मूँज । वै.निघ. ।

**शत्रुभूमिजः** । पुं । नीलाञ्जने । वै.निघ. ।

**शदः** । पुं । शाकफलादौ । व्याक. । [च. ।

**शनकावल्लिः** । पुं, स्त्री । गजपिप्पल्यां । श.

**शनपर्णी** । स्त्री । कटुक्यां । कट्की । श.च. ।

**शनिप्रियम्** । क्ली । नीलकान्तमणौ । शब्दकल्पः ।

**शनीरुहः** । पुं । महिषे । वै.निघ. ।

**शनैर्मेहः** । पुं । प्रमेहविशेषे । अत्र शनैः सकफं पिच्छिलं मेहति । सु.नि.६अ. । त्रि (ही) । शनैर्मेहनशीले ।

**शप्तः** । पुं । तृणविशेषे । উলু । श.च. ।

**शफः** । पुं । नखीनामगन्धद्रव्ये । नखी । रा.नि.व.१२ । क्ली । पशुखुरे । পশুর খুর । तरुमूले । मे. ।

**शफरः** । पुं । मत्स्यविशेषे । পুঁটী মাছ । अम. ।

**शफराधिपः** । पुं । इल्लीशमत्स्ये । त्रिका. ।

**शफरी** । स्त्री । अम्ललोणिकायाम् । আমরুল-শাক । भा.पू.१भ.शा.व. । प्रोष्ठीमत्स्ये । পুঁটী মাছ । अम. । गुणाः—"श्लेष्मकरी तु शफरी ।" अत्रि.२२अ. ।

**शबलः** । पुं । चित्रकवृक्षे । চিতা গাছ । सुगन्धतृणे । গন্ধতৃণ । मूषिकभेदे । ইন্দুরবিশেষ । वा.उ.३८अ. ।

**शब्दः** । पुं । वर्णसमाम्नाये । यथा—"शब्दोनाम वर्णसमाम्नायः । स दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति । तत्र दृष्टार्थः त्रिभिर्हेतुभिः दोषाः प्रकुप्यन्ति षड्भिरुपक्रमैश्च प्रशाम्यन्ति । श्रोत्रादिसद्भावे शब्दादिग्रहणमित्यदृष्टार्थः पुनरस्ति प्रेत्यभावोऽस्ति मोक्ष इति । सत्याः नाम यथार्थायुर्वेदोपदेशाः । सन्त्युपायाः साध्यानां सन्त्यारम्भफलानीति सत्यविपर्ययाच्चानृतः ।" च.वि.८अ. ।

**शब्दग्रहः** । पुं । कर्णे । अम. ।

**शब्दभेदी** (इन्) । पुं । मलद्वारे । शब्दकल्पः ।

**शब्दमालः** । पुं । रघुवंशे । वै.निघ. ।

**शब्दरोचनम्** । क्ली । हर्षे । वै.निघ. ।

**शब्दाख्यम्** । क्ली । श्रेष्ठकांस्यधातौ । ভাল কাঁসা । वै.निघ. ।

**शब्दाधिष्ठानम्** । क्ली । श्रवणेन्द्रिये । त्रिका. ।

**शमः** । पुं । हले । मनःस्थैर्ये । अम.टी. । उपचारे । रा.नि.व.२० । [शेष । वै.निघ. ।

**शमठः** । पुं । शाकविशेषे । तूदभेदे । तूँदवि-

**शमनः** । त्रि । समीकृतविषमदोषाणां समतापादके । वा.चि.१अ. । अरुण. । क्ली । अन्ने । वै.निघ. । "पित्तादिजिन्निरामस्य यत् स्यात्तत् शमनं मतम् ।" चर्व्वणे । धरणिः । हिंसायां । हे.च. । पुं । मृगभेदे । श.च. । कलाये । মটর । रा.नि.व.१६ । तन्नामकनिरूहवस्तौ । "प्रियङ्गुर्मधुकं मुस्ता तथैव च रसाञ्जनम् । सक्षीरः शस्यते वस्तिर्दोषाणां शमनः स्मृतः ॥" धूमपानभेदे । अत्र धूमनाड़ी रोगिणश्चत्वारिंशाङ्गुला तयैलादिकञ्च धूमद्रव्यं भाव्यम् । भा. । स्त्री (नी) । रात्रौ । कषायभेदे । येन वमनादि विनैव वातादयः शान्तिं यान्ति । च.द.ज्व.चि. ।

**शमलम्** । क्ली । विष्ठायाम् । अम. ।

**शमिः** । स्त्री । शिम्ब्याम् । ছিমড়া । हे.च. ।

**शमिका** । स्त्री । महाशमीवृक्षे । वै.निघ. ।

**शमि(मी)जः (जा)** । पुं स्त्री । रक्तकुलत्थके । (जा) शिम्बीधान्ये । भा.पू.१भ.धा.व. ।

**शमि(मी)रः** । पुं । ह्रस्वशमीवृक्षे । क्षुद्र শাঁই গাছ । श.र. । अम. । [निघ. ।

**शमिला** । स्त्री । जातीपुष्पवृक्षे । চামিলী । वै.

**शमी** । स्त्री । (Prosopis spicigera.) स्वनामख्यातसकण्टकवृक्षे । শাঁই গাছ । हिं छिकुर । मं शमी, खैरी । कं शान, कावन्नि । उत्. शुमी । सा द्विधा लघुमहाभेदेन । गुणाः—रूक्षा कषाया रक्तपित्तातिसारघ्नी च । तत्फलं स्वादु रूक्षम् उष्णं केशघ्नञ्च । रा.नि.व.८ । "शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनं ।" सु.सू.४६अ. । रक्तपलाशशमीवृक्षे । सु.चि.१अ. । See अग्निगर्भा । शिम्बायाम् । শিম্ । अम. । सोमराज्याम् । সোমরাজ । मे. ।

**शमीधान्यम्** । क्ली । शिम्बीधान्ये, माषादौ, मुद्गराजमाषतिलकुलत्थादौ च । पुरातनादिगुणाः—"शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । पुरातनं वातकृद्रूक्षं प्रायेणाभिनवं गुरु । यवगोधममाषाश्च तिलाश्चापि नवा हिताः । पुराणा विरसा

द्धचा न तथार्थकरा मता:। अनार्त्तवं व्याधिहत-मपर्य्यागतमेव च। अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतम्॥" राज.३प.।

**शमीपत्रा**। स्त्री। लज्जालुकालतायाम्। लज्जावती। रा.नि.व.५। [आलू। कोषालरम्।

**शमीरकन्दः**। पुं। वाराहीकन्दे। शुयार

**शम्पदा**। स्त्री। वृद्धौ। वृद्धि ओषधि। वै.निघ.।

**शम्याकः**। पुं। महारग्वधवृक्षे। बड़ शोणालु, सोन्दाल। अम.। मरिचाद्यतैले। रत्नमालासंग्रहे पित्तशोथचि.; विन्दुघृते च। तन्मज्जगुणाः—"स्वादुपाकोऽग्निबलकृत् स्निग्धः पित्तानिलापहः।" सु.सू.४६अ.। यावके। सम्यक्पाके। हे. च.। [छि। श.र.।

**शम्पातः**। पुं। आरग्वधवृक्षे। शोन्दाल गा-

**शम्ब(व)रः (लः)**। पुं। लोध्रवृक्षे। लोध गाछ। अर्ज्जुनवृक्षे। रा.नि.व.८। चित्रकवृक्षे। चिता गाछ। रा.नि.व.६। तालवृक्षे। रा.नि.व. २३। हले। उणा.। मृगविशेषे। शम्बर मृग। चिका.। मत्स्यभेदे। विश्व.। क्ली। जले। चिका.।

**शम्ब(व)रकन्दः**। पुं। वाराहीकन्दे। शुयार आलु। रा.नि.व.७।

**शम्ब(व)रचन्दनम्**। क्ली। वर्व्वरचन्दने। शवर चन्दन। गुणाः—तिक्तं शीतलं उष्णं श्लेष्मवातहरं श्रमपित्तविस्फोटपामादिकुष्ठतृष्णातापहरञ्च। रा.नि.व.१२। [लोध। वै.निघ.।

**शम्ब(व)रदेशजः**। पुं। शुक्लरोध्रे। श्वेत-

**शम्ब(व)रपादपः**। पुं। शुक्लरोध्रे। वै.निघ.।

**शम्ब(व)राहारः**। पुं। वनवदरे। बुनोकुल। वै.निघ.।

**शम्ब(व)री**। स्त्री। आखुकर्णीलतायाम्। मूषाकाणी। रा.नि.व.२३। शुसश्रेणीक्षुपे। रा.नि. व.४। द्रवन्तीक्षुपे। बड़ दन्ती वा स्वयंवरा। रा.नि.व.५। [निघ.।

**शम्ब(व)रीगन्धा**। स्त्री। वनतुलस्याम्। वै.

**शम्ब(व)रोद्भवः**। पुं। शुक्ललोध्रे। वा.उ. ३१अ.।

**शम्बुः**। पुं। शम्बूके। शामुक। इङ्गबः।

**शम्बु(म्बू)कः**। पुं। शम्बूके। शामुक। See शङ्खः। प्राणनाशककीटविशेषे। सु.कल्प.८अ.। शङ्खे। शाँक्। हे.च.। क्षुद्रशङ्खे। छोट शाँक्। रा.नि.व.१९।

**शम्बूकः**। पुं। शम्बूके। शामुक। श.र.।

**शम्बूकपुष्पी**। स्त्री। शङ्खपुष्प्याम्। भा.पू.१ भ.चित्तभ्रमचि.। "शम्बूकपुष्पाः स्मृताः।"

**शम्बूका**। स्त्री। जलशुक्तौ। झिनुक। शम्बूके। शामुक। रा.नि.व.१९।

**शम्बूकाद्यतैलम्**। क्ली। कर्णरोगे तैलम्। पाठः—"शम्बूकमांसकल्केन कटुतैलं विपाचयेत्। अस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति॥" द्वितीयं बृहत् यथा—"प्रस्थं शम्बूकमांसस्य कटुतैलञ्च तत्समम्। कुष्ठं भङ्गा रजो वासा स्वर्जिकाषञ्च सुह्यो घनं। विल्वं शालिञ्च पत्रञ्च केशरं नागकेसरम्। द्राक्षा चातिविषा चैव यष्टीमधुकमेव च। शटी चैरण्डकार्पासभृङ्गकेशरजस्य च। एतेषां कर्षमादाय पचेत्तैलं भिषग्वरः। तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति॥" र.स.र.।

**शम्बूकावर्त्तः**। पुं। सन्निपातजभगन्दररोगे। तस्य लक्षणं यथा—"बहुवर्णरुजास्रावा पिड़का गोस्तनोपमा। शम्बूकावर्त्तवन्नाड़ी शम्बूकावर्त्तको मतः॥" मा.नि.।

**शम्भुः**। पुं। श्वेतार्के। सादा आकन्द। श.च.। रस.चि.३अ.। "वह्निरेकः शम्भुरेकः।"

**शम्भुकेतनः**। पुं। पीतलोध्रे। वै.निघ.।

**शम्भुतेजः**। क्ली। पारदे। र.सा.सं.।

**शम्भुप्रिया**। स्त्री। आमलक्याम्। श.र.।

**शम्भुवीजम्**। क्ली। पारदे। भैष.ध्वजभङ्गचि.।

**शम्भुवल्लभम्**। क्ली। श्वेतकमले। रा.नि.व.१०।

**शम्भोःकण्ठविभूषणम्**। क्ली। विषे। कण्ठविष। भैष.पञ्चाननरसे। [निद्रायां। विश्वः।

**शयः**। पुं। हस्ते। रा.नि.व.१८। सर्पे। मे.।

**शयथः**। पुं। सर्पविशेषे। वराहे। मीने। उणा.। चि। गाढ़निद्रिते। हे.च.।

**शयनम्**। क्ली। निद्रायाम्। घुम। शय्यायाम्। विछाना। अम.। मैथुने। मे.।

**शयानकः** । पुं । कृकलासे । गिरगिट । है. च. । सर्पे । उज्ज्व. ।

**शयामूत्रम्** । क्ली । शय्यामूत्रे । वै.निघ ।

**शयालुः** । पुं । कुक्कुरे । त्रिका. । शृगाले । त्रि । अलसे । [श.मा. । त्रि । निद्रिते । अम. ।

**शयितः** । पुं । अजगरे । शैलौ । চালতা ।

**शयुः** । पुं । अजगरनामसर्पजातौ । अम. ।

**शय्या** । स्त्री । आस्तरणे, तल्पे । बिछाना । अम. । सुखशय्यागुणाः —"सुखशय्यासनं सौख्यं निद्रापुष्टिधृतिप्रदं । श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा ॥" भूशय्यागुणाः —"भूशय्याऽनिलपित्तघ्नी बृंहणी शुक्रवर्द्धनी ।" खट्वापट्टशय्योर्गुणाः —"खट्वा तु वातला प्रोक्ता पट्टो वर्षाऽतिवातलः ।" राज.प्र.प. ।

**शय्यामूत्रम्** । क्ली । शिशोः स्वप्ने मूत्रत्यागरोगे । (শয্যামূত্র?) । औषधं यथा—"कृतमुत्तार्ति भूभागमृदं दग्ध्वा तु खोलके । संचूर्ण्य मधुसर्पिभ्यां लीढ्वा स्वप्ने न मूत्रयेत् ॥" रस.र.बाल.चि. ।

**शरम्** । क्ली । जले । मे. ।

**शरः** । पुं, क्ली । (Saccharum sara.) Penreed grass. स्वनामख्याततृणे । শর গাছ । हिं काँड़ा, रामशर, शरपत् । तें रेलु, कानिवेदुरु, गुन्द्र । शरण, अंवलिनगणं इति मालवे प्रसिद्धः । पञ्जा. कंड़ । स द्विविधः स्थूलसूक्ष्मभेदेन । तद्द्विविधगुणाः—मधुरं तिक्तम् ईषदुष्णं बलवीर्य्यकरं नित्यसेवनात् ईषद्वातकरं कफभ्रान्तिमदघ्नञ्च । काशभेदे । रा.नि.व.८ । बाणे । अम. । स द्विविधः कर्णी श्लक्ष्णश्च । सु.सू.२६अ. । दध्नः अग्रभागे । দধির মাথা । मे. । महापिण्डीतरौ । रा.नि.व.९ । [सु. ।

**शरखङ्गकः** । पुं । खागड़तृणे । থাগড়া । प. ।

**शरजम्** । क्ली । नवनीते । ননি । शब्दकल्प. । हैयङ्गवीनघृते । हे.च. ।

**शरटः** । पुं । कुसुम्भशाके । কুসুম গাছের পাতা । र.मा. । पूतीकरञ्जे । নাটা । प.मु. । कृकलासे । च.टी. । स्त्री (टी) । खादिरपर्ण्याम् । लज्जावती । वै.निघ.जीर्णज्व.चि. ।

**शरणा (णी)** । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া । मद.व.३ । श.र. । जयन्त्याम् । জয়ন্তী গাছ । श.र. ।

**शरण्डः** । पुं । पक्षिणि । श.र. । गृहगोधायाम् । টিকটিকি । कृकलासे । কাঁকলাস । मे. ।

**शरत् (द्) (दा)** । स्त्री । वत्सरे । ऋतुभेदे । শরৎকাল । अम. । श.र. । तुलावृश्चिकौ शरत् । "तुलावृश्चिकयोः शरत् ।" मतान्तरे भाद्राश्विनौ । गुणाः—"शरदुष्णा पित्तकर्त्री नृणां मध्यबलावहा ।" भा. ।

**शरत्कामी** (इन्) । पुं । कुक्कुरे । श.र. ।

**शरत्पद्मम्** । क्ली । श्वेतकमले । रा.नि.व.१ ।

**शरत्पुष्पः** । पुं । आहुल्यक्षुपे । रा.नि.व.४ ।

**शरदन्तः** । पुं । शरे । हेमन्तकाले । रा.नि.व.२१ ।

**शरदुदाशयम्** । क्ली । शरत्कालिकसरोवरे । भागवतम् । [शाक । र.सा.सं. ।

**शरदुद्भवः** । पुं । क्षुपपत्रशाकविशेषे । নটে

**शरपुङ्खः (ङ्खा)** । पुं, स्त्री । (Tephrosia purpurea.) स्वनामख्यातक्षुपविशेषे । शरपुङ्खेति लोके । বননীল, শরপুঙ্খা । हिं शरफोंका । बम्. दा. जंलिकुलथि । कं येरडुकोगिग । मं उङ्गलि । तें तेल्लवेंपल्लिचेट्टु । गा. कोङ्कुक्कयवेलयिसा श्वेतपीतभेदेन द्विधा । गुणाः—कटूष्णा कृमिवातघ्ना । श्वेतशरपुङ्खा गुणाढ्या रसायने प्रशस्ता च । रा.नि.व.४ । "शरपुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः । तिक्तः कषायः कासास्रश्वासज्वरहरो लघुः ।" भा. । तद्बीजं मूषिकविषहरम् वा.उ.३८अ. । विशेषेण प्रमेहघ्नः रक्तशुद्धिकरश्च । अर्वाचीनाः । वै.निघ. ।

**शरबीजम्** । क्ली । शरधान्ये । শরের বীচি ।

**शरभः** । पुं । महासिंहे । रा.नि.व.१९ । काश्मीरदेशीयहरिणविशेषे । स उष्ट्री विशालशृङ्गश्च । एतन्मांसं कषायमधुरादिगुणयुक्तम् । शलभे । ফড়িঙ্গ । उष्ट्रे । जटा. । करिशावके । वानरभेदे । मे. । [शालिक । श.च. ।

**शरमल्लः** । पुं । शारिकाभेदे, मयनभेदे । গো-

**शरलः** । पुं । सरलवृक्षे । সরল গাছ । शब्दकल्पः ।

**शरलकम्** । क्ली । जले । श.च. ।

**शरलोमा** । पुं । ऋषिविशेषे ।

**शराटिः (ड़िः) (तिः)** । पुं । आटिनामकपक्षिणि । শরাল পাখী । श.र. । अ.टी.र.मा. ।

**शराटिका** । स्त्री । शरारिपक्षिणि । শরাল পাখী । खदिरपर्णाम् । लज्जावती । वै.निघ. ।

**शरादिपञ्चमूलम्** । क्ली । शरादिपञ्चद्रव्यकृतकषाये । यथा—"शरेक्षुदर्भकाशानां शालीनां मूलमेव च ।" च.द.अम्ल चि शरादिघृते ।

**शरादिपञ्चमूलाद्यघृतम्** क्ली । अम्लपित्ते घृते । "शरादिपञ्चमूल्या वा कषायेण पचेद्घृतम् । प्रस्थं गोक्षुरकल्केन सिद्धमद्यात् सशर्करम् ॥" च.द.अम्ल.चि. ।

**शरारिः (री)** । पुं, स्त्री । स्वनामख्यातजलजातीयपक्षिणि । শরাল পাখী । मेध.गिरोरो.चि. । तन्मांसगुणाः—वातघ्नं स्निग्धं सृष्टमलं हृष्यं रक्तपित्तहरं हिमञ्च । राज.३प. ।

**शरारि(री)मुखः** । पुं । शरारिपक्षिणि । শরাল পাখী । सु. । क्ली । धवलस्कन्धशरारिनाम्ना दीर्घचञ्चुपक्षिणश्चञ्चुसदृशमुखे विस्रावणास्त्रे । कर्त्तरीति संज्ञा लोके । কাঁচি, কাতারি । "तास्र दशाङ्गुला चलफलाग्रा कुर्य्यात् ।" सु.सू ८अ. ।

**शरालिः (का) (ली)** । स्त्री । शरारिपक्षिणि । শরাল পাখী । श.र. ।

**शरावः** । पुं । पलाष्टके, ६४ तो., १ श. । "शरावोऽष्टपलम् ।" प.प्र.१ख. । मृण्मयपात्रभेदे । শরা । अम. । [८अ. ।

**शरावकुर्द्दः** । पुं । वायव्यकीटविशेषे । सु.कल्प.

**शरावार्द्धम्** । क्ली । अर्द्धशरावपरिमाणे । /॥० আধ সের, ৩২ তোলা । प.प्र. ।

**शराविका** । स्त्री । प्रमेहपिड़काभेदे । लक्षणं यथा—"शरावमाना तद्रूपा निम्नमध्या शराविका ।" सु.नि.६अ. । [च.द धूमाधिकारे ।

**शरी** । स्त्री । मेथीलवणे । भा. । शरपुष्पनली ।

**शरीरम्** । क्ली । देहे । দেহ রা.নি.ব.१८ । शीर्य्यत इति शरीरम् । तच्च चेतनाधिष्ठानभूतम् आत्मभोगायतनं पञ्चभूतविकारसमुदायात्मकञ्च । च.शा.६अ. । "पञ्चमहाभूतविकारात्मके आत्मनो भोगायतने ।" च.सू.१अ. । च.द. । "गर्भो यदा हस्तपादादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते । तत्र शरीरं षड़ङ्गं, शाखाश्चतस्रः, मध्यं पञ्चमं, षष्ठं शिरः" इति । सु.शा.५अ.। इह खलु शरीरमधिकृत्याष्टौ पुरुषा निन्दिता भवन्ति । अतिदीर्घश्चातिह्रस्वश्चातिलोमा चालोमा चातिकृष्णश्चातिगौरश्चातिस्थूलश्चातिकृशश्चेति । च.सू.२१अ. । तस्मिंश्च शरीरे त्रीणि षष्ट्यधिकानि शतान्यस्थ्नां सह दन्तोलूखलनखैः । तद्यथा—द्वात्रिंशद्दन्तोलूखलानि, ३२ दन्ताश्च, २० नखाः, २० पाणिपादशलाकाः, ४ शलाकाधिष्ठानानि, ६० अङ्गुल्यस्थीनि, २पार्ष्ण्यस्थिनी, २कूर्चाधः,२पाण्योः मणिकाः, ४ पादयोर्गुल्फाः, ४ अरत्न्योरस्थीनि, ४ जङ्घयोः, २ जान्वोः, २ ऊर्व्वोः, २ बाह्वोः, २ अंसयोः, २ अक्षकौ बाहुसञ्जनुसन्धिकीलकौ, २ तालूनि, २ श्रोणिफलके, १ भगास्थि, १ पुंसां मेढ्रास्थि, १ त्रिकास्थि, १ गुदास्थि, ३५ पृष्ठास्थीनि, १५ ग्रीवायां, २ जत्रुस्थिनी, १हन्वस्थि, २ हनुबन्धनास्थिनी, २ ललाटे, २ गण्डयोः, ३ नासिकायां, २४ द्वयोः पार्श्वयोः, २४ पञ्जरास्थीनि, २४ पार्श्वकास्थीनि, २ शङ्खास्थीनि, ४ शिरःकपालास्थीनि, १७ वक्षसि इति । अस्मिंश्च शरीरे—इन्द्रियाधिष्ठानानि त्वगादीनि ५, स्पर्शादीनि बुद्धीन्द्रियाणि ५, हस्तादिकर्म्मेन्द्रियाणि ५, चेतनाधिष्ठानं हृदयं १, प्राणायतनानि १०, कोष्ठाङ्गानि १५, नाभ्यादीनि जङ्घापिण्डिकादीनि प्रत्यङ्गानि ५६ । नव स्नायुशतानि (९००), सप्त शिराशतानि (७००), द्वे धमनीशते (२००), पञ्च पेशीशतानि (५००), मर्म्मस्थानानि १०७, सन्धिस्थानानि च २०० । अस्मिन् शरीरे आहारपरिणामजरसपरिमाणं ९ अञ्जलयः, रक्तस्य ८ अञ्जलयः, पुरीषस्य ७ अञ्जलयः, श्लेष्मणः ६ अञ्जलयः, पित्तस्य ५ अञ्जलयः, मूत्रस्य ४ अं., वसायाः ३ अं., मेदसः २ अं., मज्जायाः १ अं., मस्तिष्कस्य शुक्रस्य श्लैष्मिकौजसश्च ॥० अं. ।च.शा.७अ. । [ति ।

**शरीरसंस्कारः** । पुं । देहस्य पवित्रीकरणे ।

**शरीरावरणम्** । क्ली । त्वचि । चामड़ा । रा. नि.व.१८ । [रा.नि.व.१८ ।

**शरीरास्थि** । क्ली । कङ्काले । अस्थिपञ्जर ।

**शरीरी** (इन्) । पुं । जीवे । जटा. ।

**शरेष्टः** । पुं । आम्रवृक्षे । जटा. ।

**शरोटिका** । स्त्री । लज्जालुकायाम् । लज्जावती । वै.निघ. ।

**शरीरजः** । पुं । रोगे । धरणिः । त्रि । देहजे ।

**शरीर(परि)मार्ज्जनम्** । क्ली । देहमार्ज्जने । गात्रमार्ज्जन । गुणाः—"दौर्गन्ध्यं गौरवं कण्डूं कच्छूं मलमरोचकं । स्वेदवीभत्सतां हन्ति शरीरपरिमार्ज्जनम् ॥" राज.२प. । [६अ. ।

**शरीरविचयः** । पुं । शरीरविज्ञाने । च.शा.

**शरीरोपस्तम्भः** । पुं । शरीरधारकत्रये । स त्रिविधः आहारस्वप्नब्रह्मचर्य्यभेदेन । लभ्यमानं धार्य्यमाणम् उप समीपं गत्वा लम्भयति धारयतीति उपस्तम्भः धारकः । च.सू.११अ. ।

**शर्करकः** । पुं । मधुरजम्बीरे । शरवतीलेबु । रा.नि.व.११ ।

**शर्करकन्दः** । पुं । (Ipomoea batatas.) आलुकविशेषे । राङाआलु । शकरकन्द आलु । हिं शकरकन्द । ता. वुल्लिकिजहङ्गु । Watts.

**शर्करजा** । स्त्री । मधुशर्करायाम् । रा.नि.व. १४ ।

**शर्कराक्षः** । पुं । ऋषिविशेषे । च. ।

**शर्करा** । स्त्री । खण्डविकारे । चिनि । सा. गुणाः—मधुरा शीता दाहपित्तश्रमघ्नी रक्तदोषघ्नी भ्रमिघ्नी क्रमिघ्नी च । रा.नि.व.१४। "सिता सुमधुरा रोच्या वृष्या शुक्रविवर्द्धनी । तत्पायिनीगुणाः—"पित्तघ्नी मधुरा बल्या शर्करापायिनी नृणाम् ।" "शर्करान्या सुशीता च कासशूलसमुद्भवा । हिता पित्तास्रजि शोषे मूर्च्छाभ्रममदापहा॥" अत्रि.१०अ. । "शर्करा ज्वरपित्तास्रङ्मूर्च्छाच्छर्दितृषापहा ।" राज. । "सिता सुमधुरा रुच्या वातपित्तास्रदाहजित् । मूर्च्छाच्छर्द्दिज्वरान् हन्ति सुशीता शुक्रकारिणी ॥" भा. । सा च खण्डोपलाशैलोपलाक्षुद्रागौडीमत्स्यखण्डपौण्ड्रकवंशेक्षुकेक्षुश्यामेक्षुरक्तेक्षुरसालेक्षुजपुष्पोद्भवमधुजयवासशर्कराभेदेन बहुधा । आसां विशेषाः पर्य्यायैः सुगमाः । मद्यविशेषे, शर्करामद्ये । गुणाः—"हरति मलमियं या दीपनी पाण्डुमेहान् लघुमधुरसुशीता रोचनी पित्तहन्त्री । जरयति सकलं वा पीतमन्नादिमात्रं श्वसनरुधिरकासान् हन्ति वा कामलाश्च ।" अत्रि.१९अ. । विषे । र.मा.सं.शीतारिरसे । वालुकायाम् । वालि । भा.म.४भ.क्षुद्री.चि.कदरलक्षणे । "शर्करोन्मथिते पादे ।" दन्तरोगभेदे, दन्तशर्करायाम् । तल्लक्षणं यथा—"शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै । सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा ॥" सु.नि.१६अ. । स्वनामकमूत्ररोगे, अश्मरीशर्करायाम् । लक्षणं—"अश्मर्य्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना । पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः । सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते ।" सु.नि.३अ. ।

**शर्करार्वुदम्** । क्ली, पुं । क्षुद्ररोगविशेषे । लक्षणं—"प्राप्य मांसशिरास्नायुश्लेष्मभेदास्तथानिलः । ग्रन्थिं कुर्व्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् । स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः । मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः । दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः शिराः । स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्वुदम् ॥" सु.नि.१३अ. । वा.उ.३१अ. ।

**शर्करालेहः** । पुं । रसायनाधिकारे लेहः । यथा—मेदा महामेदा ऋद्धि वृद्धिः जीवकः ऋषभकः काकोली क्षीरकाकोली जीवन्ती यष्टिमधु एषां प्रति ४ तो. ५ माषा. ५ र. । कुशमूलं काशमूलम् उलुमूलं शरमूलं इक्षुमूलम् एषां प्रति ३प. जलं ३२ श. शे. ८ श. । नारिकेलजलं १२ श. घृतं ४ प. । शर्करा १६ प. । सिद्धे शीते प्रक्षेपार्थं एला तेजपत्रं धान्यकं जीरकं गुड़त्वक् कृष्णजीरकं वंशलोचना नागकेसरम् एषां प्रति चूर्णं १ तो. । रस.र. ।

**शर्करासवः** । पुं । शर्करोत्थासवे । गुणाः—"सुखप्रियः सुखमदः सुगन्धिर्वस्तिरोगनुत् । जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः ॥" च.सू. २७अ. ।

**शर्करासुरभिः** । पुं । शर्करासवे । वै.निघ. ।

**शर्करोदकम्** । क्ली । सिताजले । चिनिर पाना, शरबत् । यथा—एलालवङ्गमरिचकर्पूर-युक्तशीतलजलमीलिता शर्करा शर्करोदकमुच्यते । गुणाः—शुक्रलं सरं शीतलं बल्यं रुच्यं लघु स्वादु वातपित्ततृष्णाघ्नं रक्तदोषहरं वमिमूर्च्छाज्वरदाहघ्नञ्च । भा. । [वार्यौ । व्याकरणम् ।

**शर्द्धः (नम्)** । पुं, क्ली । मरुत्कारे । अपान

**शर्द्धञ्जहः** । पुं । शिम्ब्यादौ, माषे । व्याक. । त्रि । मलद्वारेण वायुत्यागिनि ।

**शर्म्मणी** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**शर्म्मरा** । स्त्री । दारुहरिद्रायाम् । धरणिः ।

**शर्म्माख्यः** । पुं । मसूरे । मुसुरि । प.मु. ।

**शर्व्वरी** । स्त्री । रात्रौ । अम. । नार्य्यां । मे. । सन्ध्यायां । उणा. । हरिद्रायाम् । रा.नि.व.६ । भा. तन्द्रिज्वर.चि. । "कृमिहरनागरशर्व्वरी ।" कण्ठकुब्जकज्वर.चि. । "कलिङ्गसिंहाननशर्व्वरी-भिः ।" [भैष.क्षुद्ररो.चि. ।

**शर्व्वरीद्वयम्** । क्ली । हरिद्रादारुहरिद्रयोः ।

**शर्व्वाक्षम्** । क्ली । रुद्राक्षे । रा.नि.व.११ ।

**शलः** । पुं, क्ली । तालवृक्षे । वै.निघ. । उष्ट्रे । हे.च. । शल्लकीकण्टके । शजारु काँटा । अम. ।

**शलकः** । पुं । तालवृक्षे । शल्लकीकण्टके । वै. निघ. । मर्कटके । माकड़शा । त्रिका. ।

**शलङ्कः** । पुं । लवणविशेषे । उणा. । [अम. ।

**शलभः** । पुं । पतङ्गे । फड़िङ्ग, पङ्गलपोका ।

**शलभोलिः** । पुं । उष्ट्रे । हे.च. । [अम. ।

**शलली** । स्त्री । शल्लकीकण्टके । शजारु काँटा ।

**शलाका** । स्त्री । मदनवृक्षे । मयना गाछ । शरे । शर । शारिकायां । शालिक पाखी । शल्लक्यां । सजारु । मे. । नलकास्थनि । नलार हाड़ । श.च. । नेत्राञ्जनसाधनकाष्ठिकायां । अञ्जनेर शला । यथा—"दशाङ्गुला तनुर्मध्या शलाका मुकुलानना । अश्मिजा धातुजा वापि कलायपरिमण्डला । ताम्रलौहाश्मसञ्जाता शलाका लिखने मता । सुवर्णरजतोद्भूता शलाका रोहने मता ॥" वीर.वृद्ध.सु. ।

**शलाकाधिष्ठानास्थि** । स्त्री । पाणिपादयोः शलाकाख्याधारभूते अस्थनि । नलकास्थिर आधारास्थि । तानि ४ । च.शा.७अ. ।

**शलाकायन्त्रम्** । क्ली । तदाकाराष्टाविंशति-विधयन्त्रेषु । तानि नानाप्रकाराणि, नानाप्रयोजनानि यथायोगपरिणाहदीर्घाणि च । यथा—गण्डूपदमुखं शरपुङ्खमुखं सर्पफणमुखं बडिशमुखञ्चेति द्वे द्वे एषणव्यूहनचालनाहरणार्थम् । मसूरदलमात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्धरणार्थम् । षौणि दर्व्वीकृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम् । त्रीणि जाम्बववदनानि, त्रीण्यङ्कुशवदनानि अग्निकर्म्मार्थानि । षट् कार्पासकृतोष्णीषाणि प्रमार्ज्जनक्रियासु । एकं कोलास्थिदलमात्रमुखं खल्लतीक्ष्णोष्ठं नासार्वुदहरणार्थम् । एकमञ्जनार्थं कलायपरिमण्डलम् उभयतो मुकुलाग्रम् । मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति । सु.सू.७अ. ।

**शलाकास्थि** । क्ली । नलकास्थनि । नलार हाड़ । तानि ४ । च.शा.७अ. ।

**शलाटः** । पुं । शकटपरिमाणे, द्विसहस्रपले । २००० पल । "शकटः शाकटीनश्च शलाटः ।" हे.च. ।

**शलाटुः** । पुं । बिल्ववृक्षे । रा.नि.व.११ । कोमलफले । फलेर शुँटो । अम. । सु.सू.उ.३अ. ।

**शलालु** । क्ली । सुगन्धद्रव्यविशेषे । व्याक. ।

**शली** । स्त्री । क्षुद्रशल्लकीमृगे । तन्मांसं गुरु स्निग्धं शीतलं कफपित्तघ्नञ्च । रा.नि.व.१७ ।

**शल्कम्** । क्ली । खण्डे । अम. । मत्स्यत्वचि । माछेर आँइस । कोषान्तरम् । वल्कले । अम. ।

**शल्कलम्** । क्ली । मत्स्यशल्के । माछेर आँइस । तरुवल्कले । गाछेर छाल । व्याक. ।

**शल्कली (इन्)** । पुं । मत्स्ये । श.र. ।

**शल्मलिः (ली)** । पुं । शाल्मलिवृक्षे । शिमुल गाछ । (लिङ्गः) । रक्तरोहीतकवृक्षे । लाल रग्ना गाछ । रा.नि.व.८ ।

**शल्यः** । पुं, क्ली । सर्व्वशरीरदुःखोत्पादकभावमात्रे, विभिन्नलोष्टकाष्ठकादौ ।" "तमृणमस्मिति

शनीयाल्लोष्टकष्ठविभिन्नकम् ।" वै सं.२अ. । शारीरागन्तुभेदेन शल्यं द्विविधं । यत् सर्व्वशरीराबाधकरं शल्यं तदिहोपदिश्यत इत्यतः शल्यशास्त्रम् । ततः शारीरं नखरोमादिधातवोऽन्नमलादोषाश्च दुष्टाः । आगन्तु शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्तीति ते बाणाः ज्ञेया । सु.सू.२६अ. । विद्धशल्यमपि द्विविधमवबद्धमनवबद्धञ्चेति । अनवबद्धशल्योद्धरणार्थं पञ्चदश हेतवो भवन्ति । यथा – स्वभाव पाचनभेदनदारणपीड़नप्रमार्ज्जननिर्ध्मापन वमन विरेचनप्रक्षालन प्रतिमर्षप्रवाहणाचूषणायस्कान्तहर्षाश्चेति । सु.सू. २७ अ. । अस्थनि । वंशकन्विकायाम् । विश्वः । बाणे । मे. ।

**शल्यः (कः)** । पुं । बृहच्छ्वाधाकारे तन्नामकमृगविशेषे, सजारु । तन्मांसगुणाः — गुरु स्निग्धं दीपनं श्वासकासघ्नञ्च । रा.नि.व.१७ । स्वादु पित्तघ्नं लघु शीतं विषघ्नञ्च । सु.सू.४६ अ. । मदनवृक्षे । ময়না গাছ । अम. । श्वेतखदिरे । वै. निघ. । मत्स्यभेदे । শোলমাছ । रा.नि.व.१९ । पीतलोध्रे । वै.निघ. । बिल्ववृक्षे । रा.नि.व.११ । रक्तखदिरे । च.द.मेह.चि. । "विड़ङ्गदार्वीधवशल्यकानां ।" शलाकायां । हे.च. । [श.च. ।

**शल्यकण्ठः** । पुं । सल्लकीमृगे । সজারু ।

**शल्यकोटर्य्यः** । पुं । मदनवृक्षे । ময়না গাছ । रा.नि.व.८ ।

**शल्यतन्त्रम्** । क्ली । सौश्रुताष्टविधतन्त्रान्यतमे तन्त्रे । यथा – शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धारार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्च । सु.सू.१अ. । [क्ली । रा.नि.व.५ ।

**शल्यदा** । स्त्री । मेदायाम् । অভাবে অশ্বগ-

**शल्यपर्णिका (र्णी)** । स्त्री । मेदायाम् । रा. नि.व.५ । [কুকাটি । रा.नि.व.१९ ।

**शल्यलोम (न्)** । क्ली । शल्लकीरोमणि । সজা-

**शल्या** । स्त्री । मेदायाम् । रा.नि.व.५ । विकङ्कतवृक्षे । नागवल्लीलतायाम् । वै.निघ. ।

**शल्योद्धरणम्** । क्ली । विद्धशल्योत्पाटने । वै. स.२अ. ।

**शल्लम्** । क्ली । वृक्षवल्कले । ছাল । त्वचि । চামড়া । श.र. ।

**शल्लः** । पुं । भेके । श.र. ।

**शल्लकः** । पुं । शालतरुविशेषे । शल्लकी वृक्ष । जटा. । शल्लकीमृगे । সজারু । हिं साहिल । गुणाः — "शल्लकी बृंहणो बल्यः स्निग्धो वृष्यो रुचिप्रदः । वातश्लेष्महरो हृद्यो मधुरो धातुवर्द्धनः ॥" अत्रि.२०अ. । क्ली । तरुवल्कले । श.र. ।

**शल्लकी** । स्त्री । ((Boswellia serrata) Indian olibanum. शालविशेषे । शलई, शालविशेष । हिं शालइ, शलग । सुं शालयधूप । ता. कुंलि । गुणाः — "शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् । रक्तपित्तव्रणहरी पुष्टिकृत् समुदीरिता ।" भ.पू.१भ.वटादिव. । रा.नि.व. ११ । See सल्लकी । शिलारसे । च.सू.५अ. ।

**शल्लकीत्वक्** । स्त्री । शिह्लकीवृक्षत्वचि । च. सू.४अ. ।

**शल्लकीद्रवः (रसः)** पुं । सिह्लके । কুন্দুরুখোটি, শিলারস । जटा. । च.द.वा.व्या.चि. अष्टादशशतीप्रसारणीतैले । [वै.निघ. ।

**शल्ली** । स्त्री । सल्लकीवृक्षे । सल्लकीमृगे । সজারু ।

**शवम्** । क्ली । लोहे । जले । मे. ।

**शवः** । पुं, क्ली । मृतशरीरे । अम. ।

**शवकाम्यः** । पुं । कुक्कुरे । श.र. ।

**शवलः** । पुं । चित्रकक्षुपे । रा.नि.व.६ । (ला, ली) स्त्री । शवलवर्णायां गवि । अ.टी.भ. ।

**शशः (कः)** । पुं । विलेशयमृगभेदे । খরগোস । मं खरहा । तें चेवुल पिल्लि । तन्मांसगुणाः — त्रिदोषघ्नं दीपनं श्वासकासघ्नञ्च । रा.नि.व.१७ । शीतं लघु धारकं रूक्षं स्वादुकफपित्तघ्नं वाते साधारणं ज्वरातीसारघ्नं सदा हितञ्च । भा.पू.१६ । 'शशको जाङ्गलश्रेष्ठो लघुर्वृष्यश्च दीपनः । रुचिकृत्तर्पणो बल्यस्त्रिदोषशमनो मतः । ज्वरे च पाण्डुरोगे च क्षये कासे गुदामये । राजयक्ष्मणि पाण्डौ च तथातीसारिणां हितः॥" अत्रि.२०अ. । लोध्रवृक्षे । बोले । निशादले । मे. ।

**शशघाती (इन्)** । पुं । प्रसहजातीयपक्षिणि । বাজ । सु.सू.४६अ. ।

**शशधरः** । पुं । कर्पूरे । रा.नि.व.१२ ।

**शशभृत्** । पुं । कर्पूरे । हे.च. । भैष.वा.व्या. गन्धद्रव्यकथने ।

**शशलोम (न्)** । क्ली । शशकरोमणि । अम. ।

**शशशिम्बिका** । स्त्री । जीवन्तीलतायां । रा. नि.व.३ ।

**शशाङ्कः** । पुं । कर्पूरे । रा.नि.व.१२ ।

**शशाङ्कलेखा** । स्त्री । सोमराज्यां । च.द.कुष्ठ.चि ।

**शशाण्डुलिः (ली)** । पुं । स्वनामख्यातफल शाकविशेषे । তিৎকাঁকুড় । गुणाः—तिक्ता कटुः कोमला कटुम्लयुक्ता कफापहा जरठा पाके अम्लमधुरा विदाहकृत् शुष्का रुचिकृत् दीपनी च । रा.नि.व.७ । [रा.नि.व.१९ । अम. ।

**शशादः (नः)** । पुं । श्येनपक्षिणि । বাজ ।

**शशिकान्तः** । पुं । चन्द्रकान्तमणौ । रा.नि. व.१३ । क्ली । कुमुदे । শ্বেত শুক্তি । रा.नि.व.१० ।

**शशिपर्णी** । स्त्री । पटोले । वै.निघ. ।

**शशिपुष्पम्** । क्ली । पद्मे । वै निघ. ।

**शशिप्रभम्** । क्ली । मुक्तायाम् । रा.नि.व.१३ । कुमुदपुष्पे । নালকুল । श.मा. । स्त्री । ज्योत्स्नायाम् । जटा. । [वै.निघ. ।

**शशिप्रियम्** । क्ली । कुमुदपुष्पे । मुक्तायाम् ।

**शशिरे(ले)खा** । स्त्री । गुडूच्याम् । गुलुञ्च । मे. । सोमराज्याम् । হাকুচবীজ । भैष.कुष्ठ.चि. । भा.कुष्ठ.चि.स्वायम्भुवगुग्गुलौ । च.द.कुष्ठ.चि. ।

**शशिवाटिका** । स्त्री । पुनर्नवायाम् । प.मु. । रा.नि.व.५ । [चि.लक्ष्मीविलासतैले ।

**शशी (इन्)** । पुं । कर्पूरे । वै.निघ.२भ.चर्यरी.

**शशोर्णम्** । क्ली । शशकलोम्नि । अम. ।

**शष्कुलः** । पुं । करञ्जवृक्षे । ডহরকরঞ্জ । श.र. ।

**शष्कु(स्कु)ली** । स्त्री । कर्णरन्ध्रे । कर्णकुहर । श.र. । पिष्टकविशेषे । পুলিপিটে । च.चि.२अ. तिलपिष्टके । তিলের পিটে । गुणाः—गुरु पुष्टिकरी । च.सू.२७अ. । मत्स्यभेदे । সোহাবীতি মাছ । हिं सौरी । गुणाः—"शष्कुली ग्राहिणी रूक्षा मधुरा तुवरा स्मृता ।" भा. । तिलतण्डुलमाषकृतयवाग्वाम् । श.च. । "सुधौतानां तण्डुलानां पिष्टं सूक्ष्मं विधाय च । तत्प्रमाणं तत्र जलं स्थाप्यं चुल्ल्यां तु तत् पचेत् । अल्पमल्पं विकीर्य्याथ मेलयित्वा घनं पचेत् । घनीभूते तु उत्तार्य्य तत्पर्व्यां सुयुक्तितः । पूरणञ्च विधायाथ सितानीफलदं तथा । चित्रप्रान्तामर्द्धचन्द्रसमानां कारयेत् सुधीः । एवं शष्कुलयः कार्य्याः पाच्याः स्नेहनयन्त्रके । एवञ्च मोदकाः कार्य्यास्ते ह्यथा गुरवो मताः । वातपित्तप्रशमनाः मलावष्टम्भकारकाः । कफदा गुरवः शीतास्तथा तृप्तिकरा मताः ॥" वै.निघ. । "पर्पटा लघवो रूक्षा शष्कुल्यः कफपित्तलाः । मांसैरिक्षुविकारांश्च काञ्जिकांस्तिलशष्कुलीं । न भक्षयेत्...... ॥" राज. । [दूर्व्वायाम् । वै.निघ. ।

**शष्पम्** । क्ली । बालतृणे । रा.नि.व.२६ । शीत-

**शस्तः** । त्रि । प्रशस्ते । क्ली । शरीरे । त्रिका. ।

**शस्त्रम्** । क्ली । तीक्ष्णलौहे । रा.नि.व.१३ । भैष.क्षुद्ररो.चि.महानीलतैले । वै.निघ.२भ.अर्शः चि. काञ्चनीलेपे । अस्त्रे । অস্ত্র । शस्त्राणि विंशतिः तद्यथा—मण्डलाग्रं करपत्रं वृद्धिपत्रं नखशस्त्रं मुद्रिका उत्पलपत्रम् अर्द्धधारं सूची कुशपत्रम् आटीमुखं शरारीमुखम् अन्तर्मुखं त्रिकूर्चकं कुठारिका व्रीहिमुखम् आरामुखं वेतसपत्रं वडिशी दन्तशङ्कुः एषणीचेति । एतानि छेदाद्यष्टविधकर्म्मणि उपयुज्यन्ते । तत्र मण्डलाग्रकरपत्रे छेदने लेखने च, वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च, सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे । कुठारिकाव्रीहिमुखारामुखवेतसपत्राणि सूची च व्यधने । वडिशी दन्तशङ्कुश्चाहरणे । एषण्येषणे, आनुलोम्ये च । सूच्यः सीवने । इत्यष्टविधे कर्म्मणि उपयोगः शस्त्राणां व्याख्यातः । सु.सू.८अ. । एषां विशेषास्तत्पर्य्यायेषु मृग्याः । शस्त्रसम्पत् यथा—सुग्रहसुलोहसुधारसुरूपतादीनि । शस्त्रदोषाः वक्रताकुण्ठताखण्डता खरधारतातिस्थूलतातिदीर्घतातिह्रस्वता इति । करपत्रमृते अतो विपरीतगुणमाददीत । शस्त्रधाराभेदा यथा—मासूरी अर्द्धमासूरी कैशिकी अर्द्धकैशिकी चेति । तत्र भेदनानां मासूरी लेखनानामर्द्धमासूरी व्यधनविस्रावणानां कैशिकी छेदनानामर्द्धकैशिकी च । तेषां पायनापि त्रिधा क्षारोदकतैलेषु । तेषां निशाणार्थं श्लक्ष्णशि-

ला मासवर्त्ता धारसंस्थापनार्थं शाल्मलीफलकम्। सु.सू.८अ.।

**शस्त्रकम्** । क्ली । लौहे । प.मु. ।

**शस्त्रकर्म्म** । क्ली । छेदने । काटा, छेँड़ा । तच्चाष्टविधं छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यञ्चेति । शस्त्रपदञ्च महत्स्वपि पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा भवेत् । सु.सू.५अ.।

**शस्त्रकोशतरुः** । पुं । महापिण्डीतकवृक्षे । रा.नि.व.८ । [निघ. ।

**शस्त्रचूर्णम्** । क्ली । लौहकिट्टे । मण्डूर । वै.

**शस्त्रप्रणिधानम्** । त्रि । शस्त्रचालने, छेदनभेदनादिरूपौषधे । च.सू.११अ. ।

**शस्त्राङ्गा** । स्त्री । चाङ्गेर्य्याम् । आमरुल शाक । रा.नि.व.५ । [रा.नि.व.१३ ।

**शस्त्रायसम्** । क्ली । तीक्ष्णलौहे । इस्पात् ।

**शस्त्री** (इन्) । त्रि । शस्त्रधारिणि । स्त्री (स्त्री) । छुरिकायां । मे. ।

**शस्य(स्य)म्** । क्ली । कोमलतृणे । नरम गाछ । अ.टी.भ. । वृक्षादिजातफलादौ । धान्यादौ । व्रीहियवादौ च । स्मृतिः । [श.च. ।

**शस्यध्वंसी** (इन्) । पुं । तुम्बवृक्षे । तुँद गाछ ।

**शस्यमञ्जरी** । स्त्री । धान्यादिकणिशे । शस्येर शीश । अम. । [शुङा । अम. ।

**शस्यशूकम्** । स्त्री । शस्यशुकायाम् । शस्येर

**शस्यसम्बरः (रणः)** । पुं । अश्वकर्णनामलताशाले । लताशाल । रा.नि.व.१९ ।

**शस्याकः (वनः)** । पुं । रक्तशरीरवृक्षे । श.र. ।

**शाकम्** । क्ली पुं । पत्रपुष्पादौ । शाग । अम. । तत् षड्विधम्—"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजञ्चेति" राज. । तच्चतुर्विधमिति चक्रिः । "शाकञ्चतुर्विधं प्रोक्तं पत्रं पुष्पं फलं तथा । कन्दञ्चापि समुद्दिष्टं वक्ष्याम्येतत् पृथक् पृथक् ।" च.चि.१६अ. । तद्गुणाः—विष्टम्भित्वं गुरुत्वं रूक्षत्वं मलवर्द्धकत्वं पाकलघुत्वञ्च । च.द. । दोषाः—शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं वर्णं विनाशयति शुक्रमथापि कन्यां प्रज्ञाक्षयञ्च कुरुते पलितञ्च नूनं हन्ति स्मृतिं मतिमिति प्रवदन्ति तज्ज्ञाः ॥" "स्विन्नं निष्पीडितरसं हितं स्नेहादिसंस्कृतं ।" इति व्यवहारविधिः । राज.३प. । "शाकेषु सर्व्वेषु वसन्ति रोगास्ते हेतवो देहविनाशनाय । तस्माद्बुधः शाकविवर्ज्जनन्तु कुर्य्यात्तथाम्लेषु स एव दोषः ॥" भा.पू.१भ.शा.व. । प्रायः सर्व्वाणि शाकानि विष्टम्भीनि गुरूणि च । रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च । पिण्डालुका बला भिण्डी चिञ्चुकाख्या बला ...... । एते श्लेष्मकराः शाका वातलाग्निप्रशान्तकाः । सर्व्वे शाका हृदिष्टा वीर्य्यत्वात्तण्डुलीयकं । तथैव शतपुष्पा च जयन्ती कासमर्दकः । आनूपकञ्च वेत्राग्रं गुडूची चापमर्द्दकः । किराततिक्तसहितास्तिक्ताः पित्तहरा मताः ।" चचि.१६अ. । पुं । वृक्षविशेषे । शेगुन गाछ । रा.नि.व.९ । "महत्पत्रकर्कशोदरपृष्ठदलो वृक्षविशेषः ।" सु.सू.३८अ. । शाकफले । शेगुन फल । "राजाह्वं दाडिमं शाकम् ।" वा.सू.१५अ. ।

**शाकचुक्रिका** । स्त्री । चिञ्चायाम्, तिन्तिडीम् । तेतुल गाछ । रा.नि.व.११ ।

**शाकटः** । पुं । श्लेष्मान्तकवृक्षे । चालता गाछ । रा.नि.व.११ । धववृक्षे । धाओया गाछ । र.मा. ।

**शाकटमुखम्** । क्ली । पटवासे । गन्धचूर्ण । वै.निघ. ।

**शाकटाख्यः** । पुं । धववृक्षे । र.मा. ।

**शाकटीनः** । पुं । २० तुलापरिमाणे । २००० पले । वै.च.प.प्र. । [श.मा. ।

**शाकतरुः** । पुं । शाकवृक्षे । शेगुन गाछ ।

**शाकद्रुमः** । पुं । वरुणवृक्षे । वै.निघ. ।

**शाकपत्रः** । पुं । शिग्रुवृक्षे । सजिना गाछ । रा.नि.व.७ । [शाक । वै.निघ. ।

**शाकपार्थी** (इन्) । पुं । सुनिषण्णके । शुशुनि

**शाकफलम्** । क्ली । तन्नामकवृक्षफले । शेगुन फल । सु.सू.३८अ. ।

**शाकमत्स्यम्** । क्ली । मत्स्याद्यन्नभेदे । गुणाः—मत्स्यकमन्दे दृष्टाः । राज. । [श.र. ।

**शाकबालेयः** । पुं । ब्रह्मयष्ट्यां । वामुनहाटी ।

**शाकम्भरीभवम्** । क्ली । रोमकलवणे । साम्बर लवण । भा. ।

**शाकयोग्यः** । पुं । धान्यके । धनियां । रा.नि.व.६ । [তো শাক । रा.नि.व.७ । भा. ।

**शाकराजः (ट्)** । पुं । वास्तूकक्षुपे । বে-

**शाकवरः** । पुं । जीवशाके । प.मु. । वा.उ.१७अ. । स्त्री (रा) । जीवन्तीशाके । वै.निघ. ।

**शाकवल्ली** । स्त्री । लताकरञ्जके । वै.निघ. ।

**शाकविन्दः (ल्वः) (कः)** । पुं । वार्त्ताकुवृक्षे । जटा. । त्रिका. ।

**शाकवीजम्** । क्ली । शाकतरुवीजे । শেগুনের বিচি । "मधुकं शाकवीजञ्च ।" भा.४अ. योनि.टी.गर्भचि. । मरुजतरुवीजे । च.द.गर्भाधिकारे । शाकवीजे । শাকের বীচি ।

**शाकवीरः** । पुं । वास्तूकक्षुपे । বেতো শাক । पुनर्नवायाम् । त्रिका. । जीवशाके । रा.नि.व.७ ।

**शाकवृक्षः** । पुं । (Tectona grandis.) Teak tree. स्वनामख्यातवृक्षे । শেগুন গাছ । हिं शगुण । उत्. सिंगुरु । ता. टेक । बम्. खरपत्र । मं सीयें । कं नैग । तें टेकचेट्टु । गुणाः—सारकः पित्तदाहश्रमघ्नः सरः कषायश्च । तद्वल्कलं कषायम् । रा.नि.व.९ ।

**शाकशाकट(किन)म्** । क्ली । शाकक्षेत्रे । শাকের ক্ষেত । रा.नि.व.२ । हे.च. ।

**शाकशालः** । पुं । महानिम्बे । মহানিম্ । हिं बकाइन । वै.निघ. ।

**शाकश्रेष्ठः** । पुं । वास्तुकक्षुपे । अर. । रा.नि.व.२३ । स्त्री (ष्ठा) । लघुजीवन्तीलतायाम् । जीवन्ती । रा.नि.व.३ । डोडीक्षुपे । लतावृहती । वार्त्ताकी । বেগুন গাছ । रा.नि.व.४ । कुष्माण्डलतायाम् । কুমড়া গাছ । तरम्बुजलतायाम् । তরমুজ গাছ । वै.निघ. ।

**शाका** । स्त्री । हरीतक्याम् । शब्दकल्प: ।

**शाकाख्यम्** । क्ली । व्यञ्जनयोग्यफलमूलपत्रपुष्पादौ । ব্যঞ্জনার্হ ফল, মূল, পাতা, ফুল ইত্যাদি শাকপদবাচ্য । अम. । "मूलपत्रकरीरायफलकाण्डाधिरूढ़कम् । त्वक्पुष्पं कवकञ्चैव शाकं दशविधं स्मृतम् ॥" अ.टी.भ. । पुं । शाकवृक्षे । শেগুন গাছ । र.मा. ।

**शाकाङ्गम्** । क्ली । मरिचे । रा.नि.व.६ ।

**शाकान्नम्** । क्ली । शाकयुक्तभक्तं । गुणाः—"शाकान्नं लेखनं चोष्णं रुक्षं वै दोषद्रावकम् ।" वै.निघ. ।

**शाकाम्लम्** । क्ली । वृक्षाम्ले । তেঁতুল । रा.नि.व.६ । चिञ्चाम्ले । তেঁতুলের অম্বল । रा.नि.व.११ ।

**शाकाम्लभेदनम्** । क्ली । चुक्रनामककाञ्जिकभेदे । रा.नि.व.१५ । See शुक्तचुक्रम् ।

**शाकालावुः** । स्त्री । राजालावुके । বড়লাউ গাছ । रा.नि.व.७ ।

**शाकुनिकः** । पुं । शकुनशास्त्रज्ञे । पक्षिमारके । পাখীমারা । अम. । [रा.नि.व.१९ ।

**शाकुनेयः** । पुं । पक्षिभेदे । ডুণ্ডুল পক্ষী ।

**शाखा** । स्त्री । पल्लवे । ডাল । अम. ।

**शाखाकण्टः** । पुं । स्नुहीवृक्षे । মনশা গাছ । रा.नि.व.८ ।

**शाखापित्तम्** । क्ली । हस्तपादांसमूलदाहे । मुखताल्वोष्ठादिषु सदाहदवथौ । হাত পা ও মুখাদি জ্বালা । "सदाहमुखताल्वोष्ठ दवथुश्चक्षुरादिषु । पाणिपादांसमूलेषु शाखापित्तं तदुच्यते॥" रा.नि.व.२० ।

**शाखामृगः** । पुं । कपौ । प.मु. ।

**शाखाम्ला** । स्त्री । तिन्तिड़ीवृक्षे । रा.नि.व.६ ।

**शाखारोगः** । पुं । रक्तादिधातुष्वेषु त्वगेषु च वीसर्पगुल्मादिषु रोगेषु । च.सू.११अ. ।

**शाखालः** । पुं । जलवेतसे । रा.नि.व.९ ।

**शाखावातः** । पुं । हस्तपदादिगतवातरोगे । वैद्यकम् । [নিটাদিন নামান । वै.निघ. ।

**शाखाशिफा** । स्त्री । शाखाजातशिफायाम् ।

**शाखी (न्)** । पुं । वृक्षे । अम. ।

**शाखोटः (कः)** । पुं । (Streblus asper.) स्वनामख्यातवृक्षे । শেওড়াগাছ । हिं सहोरा, सिहोड़ । कं शाखोड़मरवु । मं शाखोट । तें भारायणचेट्टु, बरनुकी । बम्. शाखोटा । गुणाः—तिक्ताद्यः पित्तकरः वातघ्नः । रा.नि.

ব.৫। পলতৈলং বিষদং তীপনমেতি লোকে। রক্তপিত্তাত্মাজীবাতশ্লেষ্মাতিসারজিত্। ভা.।

**শাকর:** । পুং । কোমলতৃণভেদে । সু.চি.২৫অ.। দ্বে । শিখা.। স্ত্রী (রী)। শমীবৃক্ষে। বৈ.নিঘ.।

**শাঙ্কিত:** । পুং । ঘন্থিপর্ণভেদে । চোরা। বৈ.নিঘ.। [মাছ। শ.চ.।

**শাকুচী** । স্ত্রী । শকীশমৎস্যে। শাঁকোচ

**শাকুন্তা** । স্ত্রী । গুঞ্জায়াম্। র.মা.।

**শাঙ্কী** । স্ত্রী । শালিঞ্চশাকে। রস.চি.৯অ.।

**শাটিকা** । স্ত্রী । শট্যাম্। শঠী। অ.টী.ভ.।

**শাণ:** । পুং । মাষচতুষ্টয়মিতে মানবিশেষে। ৪ মাষা। "মাষৈশ্চতুর্ভি: শাণ: স্যাত্।" প.প্র.। "বিন্দুভিশ্চাষ্টভি: শাণ: প্রোক্তশ্চ ভিষগ্গণৈ:।" করণমঞ্জরে। কষ্টিপাথর। অম.। লৌহাদিনিশাণযন্ত্রে। শাণ। মে.।

**শাণি:** । পুং । পট্টশাকবৃক্ষে। পাটশাক। শ.মা.।

**শাদ্বল:** । পুং । নীলদূর্ব্বায়াম্। বৈ.নিঘ.।

**শাণ্ডিল্য:** । পুং । বিল্ববৃক্ষে। রা.নি.ব.১১।

**শাত:** । ত্রি । শাণিতে। পুং । ধুস্তূরবৃক্ষে। অম.।

**শাতকুম্ভম্** । ক্লী । সুবর্ণে। রা.নি.ব.১৩। পুং। ধুস্তূরবৃক্ষে। অম.। করবীরবৃক্ষে। মে.।

**শাতকৌম্ভম্** । ক্লী । সুবর্ণে। ভ.দ্বি.।

**শাতপত্রক:** । পুং । চন্দ্রপ্রকাশে। শ.চ.।

**শাতভীরু:** । পুং । মদনমালীনামমল্লিকাবৃক্ষে। র.মা.।

**শাতলা** । স্ত্রী । স্বনামপ্রসিদ্ধসেহুণ্ডভেদে। পীতসেহুণ্ডে। চর্ম্মকষা ইতি লোকে। মনসাভেদ। গুণা:—"শাতলা কটুকা পাকে বাতলা শীতলা লঘু:। তিক্তা শোথকফানাহপিত্তোদাবর্ত্তরক্তজিত্।" ভা.।

**শাদ:** । পুং । কর্দ্দমে। কোমলতৃণে। অম.।

**শাদ্বল:** । পুং । দূর্ব্বায়াং। বা.চি.২অ.।

**শাদ্বলাভ:** । পুং । মন্দবিষবৃশ্চিকভেদে। সু.কল্প.৮অ.।

**শান:** । পুং। ৪ মাষকে। ৪ মাষা। "মাষৈশ্চতুর্ভি: শান: স্যাত্।" প.প্র.১খ। ২ মাষকে। ৭ মাষা। অত্রি:। [পিঁড়ী। মারব।

**শানপাদ:** । পুং । চন্দনপীঠিকায়াং। চন্দন-

**শানী** । স্ত্রী । ইন্দ্রবারুণ্যাং। রাখালশসা। শ.চ.।

**শান্তনু:** । পুং । কুধান্যবিশেষে। সু.সূ.৪৬অ.। কর্কটিকায়াং। কাঁকুড়গাছ। র.মা.।

**শান্তা** । স্ত্রী । আমলক্যাম্। রা.নি.ব.১১। See অকরা। শমীবৃক্ষভেদে। রা.নি.ব.৮।

**শাপটিক:** । পুং । ময়ূরে। শব্দকল্প:। [২য়

**শাবরবল্কলম্** । ক্লী । লোধ্রত্বচি। বা.বি.

**শামীলম্** । ক্লী । ভস্মনি। ছাই। সা.কৌ.

**শাম্বর:** (রিক:) । পুং । লোধ্রবৃক্ষে। বৈ.নিঘ

**শাম্বরী** । স্ত্রী । মূষিকমায্যাম্। ইন্দুরমারীগাছ। বৈ নিঘ.।

**শাম্বু(ম্বূ)ক:** । পুং । শম্বুকে। শ.র.।

**শাম্ভবম্** । ক্লী । দেবদারুণি। রা.নি.ব.১২

**শাম্ভব:** । পুং । গুগ্গুলৌ। রা.নি ব.১২। বিষভেদে শ.চ.। কর্পূরে। রা.নি.ব.১২। শিবমল্লিকায়াং। বক পুষ্প। রা.নি.ব.১০।

**শাম্ভবী** । স্ত্রী । ধান্যাদিকঞ্চুক্যাম্। ধান্যাদির খোসা। রা.নি.ব.১৬। নীলদূর্ব্বায়াং। রা.নি.ব.৮।

**শায়িকা** । স্ত্রী । নি[illegible]। [অ.টী.ভ.

**শারঙ্গ:** । পুং । হরি[illegible]। চাতকে। গজে। ময়ূরে

**শারদম্** । ক্লী । শুক্লপদ্মে। রা.নি.ব.১০। পুং শরত্কালীনশালিধান্যভেদে। অয়ং ষষ্টিকতুল্যগুণ:। চ.সূ.২৭অ.। হরিতমুদ্গে, ধূসরমুদ্গে। সোমুগ। রা.নি.ব.১৬। র.মা.। বকুলবৃক্ষে রা.নি.ব.২৩। কৃষ্ণমুদ্গে। কালমুগ। রা.নি.ব.২৩। সপ্তপর্ণবৃক্ষে। ছাতিম গাছ। অম.। দ.মেদ.চি.। "বয়সশ্চ শারদস্য চ"। সরিফায়াং মহারাষ্ট্রীলতায়াম্। কাঁচড়া। কাসমর্দে। নি.ব.২৩। রোগে। বৎসরে। মে.। [জলম

**শারদজলম্** । ক্লী । শরত্কালীনজলে। Se

**শারদমল্লিকা** । স্ত্রী । শরত্কালভবমল্লিকায়াম্। শারদমল্লিকা। রমা.।

**शारदमुद्गः** । पुं । हरितमुद्गे । "कपित्थान् शारदान् मुद्गान् ।" सि.यो.अ.आ.चि. ।

**शारदयावनालः** । पुं । शारदीययावनाले। गुणाः—श्लेष्मकरः पिच्छिलः गुरुः शीतलः मधुरः वृष्यः बलपुष्टिदश्च । रा.नि.व.१६ ।

**शारदा** । स्त्री । काष्ठशारिवायाम् । अनन्तमूल । रा.नि.व.१२ । ब्राह्मीशाके । रा.नि.व.५ ।

**शारदिकः** । पुं । शरत्कालीनरोगे । व्याक. ।

**शारदी(दिन्)** । पुं । सप्तपर्णवृक्षे । छातिम गाछ । अम. । कच्छटशाके । कँचड़ाशाक । र. मा. । अपराजितायां । अ.द. ।

**शारिः (का)** । स्त्री । स्वनामख्यातपक्षिणि । शालिक, मयना । चिका.। शालिधान्यभेदे । च.सू. २७ अ. ।

**शारिवा** । स्त्री । (Hemidesmus Indicus, Syn. asclipias pseudosarsa.) स्वनामप्रसिद्धलतायाम् ।"जम्बूपत्रा दुग्धगर्भा वल्ली स्वनामख्याता ।" सु.सू.३८अ.। अनन्तमूल । हिं अनन्तमूल,उपलसरी । उत्. गुयापानमूल । कों शेंवेल । सा द्विधा श्वेता कृष्णा चेति । भा.पू.१भ. काष्ठशारिवा कृष्णशारिवा चेन्नुरापथे प्रसिद्धा । गुणाः—शारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु अग्निमान्द्यारुचिघ्नं श्वासकासविषनिबर्हणम् त्रिदोषघ्नं रक्तप्रदरज्वरातीसारनाशनञ्च । मद.व.१ । मधुरे हिमे भूतघ्नौ कुष्ठकण्डूज्वरहरे देहदुर्गन्धहरे च । रा.नि.व.१२ । शुक्लं स्निग्धं स्वादु अग्निमान्द्यादिहरञ्च । भा.पू.१भ. । वै.निघ,सा.ज्व.चि.चक्रादि. दुरालभायां । पटोलादौ, व्याघ्र्यादौ । वै.निघ. उन्मा.चि.सारस्वतघृते । रस.र.अष्टमङ्गलघृते ।

**शारी** । स्त्री । कुशे, शरपत्रकुशे, सुश्रुतचे । रा. नि.व.८ ।

**शारीरम्** । क्ली । (Anatomy.) सुश्रुतादिवैद्यकसंहितासु शरीरमधिकृत्य कृते शरीरतत्त्वव्याख्याने अन्यतमे स्थाने । यत्र शुक्रशोणितशुद्धिगर्भावक्रान्तिगर्भशरीरसंख्याममर्मशिराशिराव्यधधमनीगर्भिणीव्याकरणानि कृतानि । सु.शा.व.शा. १अ. । पुं । वृषे । मे.। See शरीरम् । [रसाल ।

**शारीरकग्रन्थः** । पुं । श्रीमुखविरचितशारी-

**शारीरगुणः** । पुं । दैहिकगुणसमष्टौ । स च विंशतिसंख्यकः यथा लघुगुरुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवा इति । च.सू.१अ. ।

**शारीरज्वरः** । पुं । देहगतज्वरे । लक्षणं— "शारीरो जायते पूर्व्वं देहे मनसि मानसः । इन्द्रियाणाञ्च वैकल्यं देहसन्तापलक्षणम् ॥" च.चि. ३अ. ।

**शारीरव्रणः** । पुं । शरीरसम्बन्धिवातादिदोषजनितव्रणे । स द्विविधः शारीरागन्तुभेदेन । यथा —"द्विधा व्रणः स विज्ञेयः शारीरागन्तुभेदतः । दोषैराद्यस्तयोरन्यः शस्त्रादिक्षतसम्भवः । स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः । तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः। तृष्णामोहज्वरक्लेददाहदुष्ट्यवदारणैः । व्रणं पित्तकृतं विद्याद्गन्धैः स्रावैश्च पूतिकैः। बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः । पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः । रक्तो रक्तस्रुतो रक्तात् द्विजिः स्यात्तदन्वयैः । त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः । धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः । गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः । सर्व्वैर्विहीनो विज्ञेयस्त्वसाध्यो भूर्य्युपद्रवः ॥" इत्यादि । मा.नि. ।

**शार्कः** । पुं । शर्करायाम् । चिनि । श.र. ।

**शार्ककः** । पुं । दुग्धफेने । शर्करापिण्डे । मे. ।

**शार्करः** । पुं । लोध्रवृक्षे । दुग्धफेने । मे. ।

**शार्करमद्यम् (शीधुः)** । क्ली, पुं । शर्कराधातकीसिद्धमद्ये । लक्षणं—"शर्कराधातकीतोयक्वथितैः शार्करो मता ।" इति । द्रव्यगुणमाला । गुणाः – शीतं वृष्यं दीपनं मोहनञ्च । रा.नि.व. १४। अन्यः शर्कराजाततीक्ष्णमद्ये । गुणाः— मधुरः रुच्यः दीपनः बस्तिशोधनश्च । सु.सू.४५अ. ।

**शार्करिलः** । त्रि । शर्करान्वितभूभागे । शर्कराभूयिष्ठे । व्याक. ।

**शार्ङ्गम्** । क्ली । आर्द्रके । आदा । रा.नि.व.६ ।

**शार्ङ्गधरः** । पुं । स्वनामख्यातचिकित्सासंग्रहकारे । ज्वरत्रिशतीकारे । [र्ङ्गधरटीकाविशेषे ।

**शार्ङ्गधरदीपिका** । स्त्री । आढमल्लकृते शा-

**शार्कवेरिकः** । पुं । शृङ्गीसमानवर्णे स्थावर विषभेदे । अग्नि.३ध्याय.५१श. ।

**शार्ङ्गेष्टा** । स्त्री । काकजङ्घायाम् । কাঁটা গুড়কাউলি । सु.चि.२३श. । काकमाच्याम् । गुञ्जायां । सु.सू.३८श. ।

**शार्ङ्गी(र्ङ्गि)ष्टा** । स्त्री । महाकरञ्जे । ডহরকরঞ্জ । रा.नि.व.९ । वा.उ.२श. । लताकरञ्जे । काकमाच्याम् । वै.निघ. ।

**शार्दूलः** । पुं । व्याघ्रे । रा.नि.व.१९ । चित्रकवृक्षे । रा.नि.व.६ । पक्षिविशेषे । धरणि । सरभे । मे. ।

**शार्दूलजम्** । क्ली । व्याघ्रनखे । নথী । वै.निघ. ।

**शार्व्वरी** । स्त्री । रात्री । अ.टी.भ. । रोध्रे । লোধ । वै.निघ. ।

**शालः** । पुं । राले । ধুনো । रा.नि.व.१२ । शाले । मत्स्यभेदे । শাল মাছ, গজাড় । त्रिका. । वृक्षे । रा.नि.व.२ । लकुचवृक्षे । रा.नि.व.९ । (Shorea robusta.) स्वनामख्यातवृक्षे । শাল গাছ । हिं शाल, शालवा । तें एपचेट्टु । ता. कुङ्गिलियम् । गुर्ज. गल । गुणाः— '........कषायः स्यात् व्रणस्वेदकफक्रिमीन् । व्रध्नविद्रधिबाधिर्य्ययोनिकर्णगदान् हरेत् ॥'' भा.पू.१भ.वटादिः । शल्ली । सु.चि.९श. । अर्ज्जुनवृक्षे । प्रियालवृक्षे । वै.निघ. । [वै.निघ. ।

**शालकम्** । क्ली । नाड़ीशाके । পাটশাক ।

**शालकल्याणी** । स्त्री । पत्रशाकविशेषे । गुणाः —''शाकं गुरु च रूक्षञ्च प्रायो विष्टभ्य जीर्य्यति । मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम् ॥'' च.सू. २७श. । [र. ।

**शालजः** । पुं । शालमत्स्ये । শাল মাছ । श.

**शालद्वयम्** । क्ली । शालपीतशालयोः । শাল, পেয়াশাল । सा.कौ.शिलाजतुशोधने ।

**शालनम्** । क्ली । हरितके । শাকশজি । वा. चि.७श. ।

**शालनिर्यासः** । पुं । राले । ধুনো । रा.नि. व.१२ । भा.म.४भ.पादस्फुटोच. । सर्ज्जवृक्षे । रा. नि.व.९ ।

**शालपत्रसमपत्री** । स्त्री । शालपर्ण्याम् । শালপাণি । प.मु. । रत्ना. । [मूर्वा । वै.निघ. ।

**शालपर्णिका** । स्त्री । मुरायाम् । একাঙ্গী,

**शालपर्णी** । स्त्री । (Desmodium gangeticum. Syn. Hedysarum gangeticum.) स्वनामख्यातक्षुपे । শালপাণি । रा. नि.व.४ । See अंशुमती ।

**शालपर्ण्यादिः** । पुं । तदादिद्रव्यगणे । यथा शालपर्णीपृश्निपर्णीवाट्यालकबिल्वशलाटुषु । শালপাণি, চাকুলে, বেড়েলা, বেলশুঁট । च.द.र.पि.चि.शालपर्ण्यादिः । ''शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता । दाड़िमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥'' [निघ. ।

**शालमर्कटः (कः)** । पुं । दाड़िमवृक्षे । वै.

**शालरसः** । पुं । राले । ধুনো । रा.नि.व.१२ ।

**शालवः** । पुं । लोध्रवृक्षे । श.र. ।

**शालवर्गः** । पुं । शालसारादिवर्गे । भा. ।

**शालवेष्टः** । पुं । शालनिर्यासे । ধুনো । त्रिका. ।

**शालशाकम्** । क्ली । नाड़ीशाके । वै.निघ. ।

**शालसारः** । पुं । शालवृक्षे । सु.सू.३८श. । हिङ्गुवृक्षे । विश्वः ।

**शालसारादिः** । पुं । तदादिद्रव्यगणे । यथा —''शालयुग्मं करञ्जौ द्वौ खदिरश्चन्दनद्वयम् । गर्द्दभाण्डोऽर्ज्जुनो भूर्जो लोध्रयुग्मं तथा । शिरीषागुरुकालीयपूगपूतिककर्ण . . । शालसारादिरप्येष गणः कुष्ठगदापहः ॥'' शालयुग्मं शालप्रियालौ । गर्द्दभाण्डो भाँटिरिति प्र. । पूतिकाौ गन्धभादुलिः । सा.कौ. ।

**शाला** स्त्री । तरुशाखायां । गृहे । त्रिका. ।

**शालाकी** (इन्) । पुं । शस्त्रवैद्ये ।

**शालाक्यम्** । क्ली । आयुर्व्वेदस्य अष्टविधतन्त्रान्यतमे । तत्र ऊर्द्ध्वजत्रुगतरोगाणां श्रवणनयनाद्याश्रितरोगाणाञ्चोपशमनार्थम् । सु.सू.१श. । ''शिरोरोगा नेत्ररोगाः कर्णरोगा विशेषतः । मुखनासागलस्थास्तु ये रोगाः सम्भवन्ति हि । तेषां प्रतीकारकर्म्म नासावर्त्माञ्जनानि च । अभ्यङ्गमुखगण्डूषक्रियाः शालाक्यकारकाः ॥'' वैद्य.सं.१श. ।

**शालाङ्गार:** । पु । कर्म्मकारशालाग्नौ । কামার শালের আগুন । रस.चि.८म. । शालकाङ्गारे ।

**शालाजिर:** । पुं । शरावे । শরা । त्रिका. ।

**शालाञ्चि:** । पुं । शाकभेदे । শালিঞ্চাশাক । श.र. । [श.र. ।

**शालानी** । स्त्री । विदार्य्याम् । শালপাণি ।

**शालामर्कटकम्** । क्ली । चाणक्यमूले । रा.नि.व.७ । बालमूलके । भा.पू.१भ.शा.व. ।

**शालामुख:** । पुं । कृष्णशूकतण्डुलव्रीहिधान्ये । "शालामुख: कृष्णशूक: कृष्णतण्डुल उच्यते ।" भा.पू.१भ.धा.व. ।

**शालामृग:** । पुं । शृगाले । हारा. ।

**शालावृक:** । पुं । प्रसङ्गजातीयशृगालविशेषे । ফেউ । विड़ाले । रा.नि.व.१९ । वानरे । कुक्कुरे । अम. । मृगे । हरिणे । श.र. ।

**शालि:(धान्यम्)** । पुं,क्ली । हैमन्तिकधान्ये । আমন ধান্য, হৈমন্তিক ধান । देशभेदेन तस्य नानाभेदा दृश्यन्ते । ते च यथा—शालिर्महाशालि: कलम: तूर्णक: शकुनाहृत: सारामुख: दीर्घशूक: रोध्रशूक: सुगन्धक: पतङ्ग: तपनीयश्च । एते निर्द्दोषा: शालय: । गुणा: बद्धाल्पवर्चस: स्वादुपाकरसा: स्निग्धा वृष्या: कषायानुरसा लघव: पथ्या मूत्रला हिमाश्च । वा.सू.६भ. । न मधुरा वीर्य्यत: शीता लघुपाका बलावहाश्च । सु.सू.३८भ. । शालि: कलम: सुगन्धक: शकुनाहृत: महाशालि: शीतभीरुक: रोध्रपुष्पक: महिषमस्तक: कर्द्दमक: पाण्डुक: महादूषक: पुष्पाण्डक: पुण्डरीक: काञ्चनक: दीर्घशूक: हायनक: दूषक: महादूषकश्च । सु.सू.४६भ. । गुणा:—मधुरा: शीता लघुपाका बलकरा: पित्तघ्ना: वातकरा: स्निग्धा बद्धाल्पवर्चसश्च । राज. । शालिसामान्यगुणा:—मधुरा रुच्या: । राजनिघण्टुस्तु शालिधान्यस्य दशभेदानाह, राजान्नषष्टिककृष्णरक्तमुण्डस्थूलाणुगन्धनिरापव्रीहय इति दश भेदा: । एषां विशेषा: पर्य्याये द्रष्टव्या: । "राजान्नं दीर्घशूक: खरिपुदिवसज: षष्टिको वर्षतो द्वौ नि:शूको मुण्डशालि: स्थूलबिम्बदिन: स्वाभिधानाणवीऽन्ये । माषैर्वोऽन्यस्त्रिभि: स्यात् स भवति निरपो वापि वृत्यम्बुसम्भूरेष: स्याद्व्रीहिसंज्ञस्तदिति दशविधा: शालयस्तु प्रसिद्धा: ॥ रा.नि.व.१६ । हारीतस्तु शालीनामष्टादशभेदानाह । भा. । "रक्तशालिर्महाशालि: कलम: षष्टिकोऽपर: । खञ्जरीटापसाढी च जीरकाख्या कपिञ्जला । सौगन्धी शूकला चान्या बिलवासी कचोरका । गुरुड़ा रुक्मवल्ली च कलमाख्या तथापरा । विल्वजा मागधी पीता ता अष्टादश शालय: । देशे देशे विभिन्नानि नामानि परिलक्षयेत् । समानै: गुणै: सर्व्वास्तान् भूमिभागोद्भवान् विदु: । शालयश्छिन्नरोहाश्च मूत्रला बद्धवर्चस: । ग्रीष्मकाले सुपथ्याश्च मूत्रला वातला हिमा: ।" भा.चि.१५भ. । लक्षणं यथा—'कण्डनेन विना शुक्ला हैमन्ता: शालय: स्मृता: ।" गन्धमृगे । गन्धगोकुले । त्रिका. । कृष्णजीरके । रा.नि.व.६ । रसालयाम् । वै.निघ. ।

**शालिका** । स्त्री । विदारिकायाम् । ভুঁই কুমড়া । श.र. । [थाटाशी । च.द.वा.व्या.चि. ।

**शालिज: (जाड्क:)** । पुं । खड्गशाके ।

**शालिञ्च: (ञ्ची)** । पुं, स्त्री । स्वनामख्यातशाकभेदे । শালিঞ্চা শাক, শাঞ্চি শাক । गुणा:—"शालिञ्ची दीपनस्तिक्त: प्लीहार्श:कफपित्तजित् ।" राज.३प. । [रा.नि.व.४ ।

**शालिदला** । स्त्री । अंशुमत्याम् । শালপাণি ।

**शालिनाथ:** । पुं । रसमञ्जरीकारे ।

**शालिनी** । स्त्री । पद्मकन्दे । रा.नि.व.१० । मेथिकायाम् । वै.निघ. ।

**शालिपर्णिका** । स्त्री । सुरामांस्यां । वै.निघ. ।

**शालिपर्णी** । स्त्री । अंशुमत्याम् । শালপাণি । रा.नि.व.४ । च.द.ज्व.चि. । "शालिपर्णीपृश्निपर्णी ।" माषपर्ण्याम् । माषाणी । रा.नि.व.३ । मेदायां । पृश्निपर्ण्याम् । वै.निघ. ।

**शालिपिष्टम्** । क्ली । स्फटिके । त्रिका. ।

**शालिमूलम्** । क्ली । हैमन्तिकधान्यमूले । च.चि.३भ. । [শর ধান । प.मु. ।

**शालिराट्** । पुं । महाशाली, राजशाली ।

**शालिशक्तु:** । पुं । शालिधान्यकृतसक्तुके । गुणा:—"मधुरा लघव: शीता: शक्तव: शालिसम्भवा: ।

शालिनी रक्तपित्तघ्नाः तृष्णाच्छर्दिज्वरापहाः ॥” च.सू.२७अ. ।

**शालिहोत्रः** । पुं । तन्नामकाश्वशास्त्रप्रणेतरि ऋषिविशेषे । घोटके । त्रिका. ।

**शालिहोत्रम्** । क्ली । नकुलकृते अश्ववैद्यकविशेषे । अपरं भोजराजकृतञ्च ।

**शाली** । स्त्री । कृष्णजीरके । रा.नि.व.६ । मेथिकायां । शालपर्ण्यां । दुरालभायाम् । वै.निघ. ।

**शालीना** । स्त्री । मिश्रेयाख्यक्षुपे। মউরিগাছ। रा.नि.व.४ ।

**शालु** । क्ली । शालूके । শালুক । श.र. । पुं । भेके । हे.च. । चौरकनामगन्धद्रव्ये । গেঁটেলা বিশেষ । मे. ।

**शालु(लू)कम्** । क्ली । पद्मकन्दे । পদ্মের গেঁড়ো, শালুক । रा.नि.व.२३ । अम. । हिं कसेरु भिसौड़ा । तें जाजिकाय । गुणाः—शीतलं वृष्यं पित्तदाहास्रघ्नं गुरु दुर्जरं स्वादुपाकं स्तन्यवातकफकरं संग्राहि मधुरं रूक्षञ्च । तत् बालम्—अनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम् अग्न्यादिदूषितञ्च वर्ज्यम् । तथातिजीर्णम् अकालोत्थम् अतैलादिसिद्धं कर्कशमतिकोमलं व्यालादिदूषितं मूलकं विना शुष्कञ्च शाकं नाश्नीयात् । भा.पू.१भ.शा.व. । च.द.वा.व्या.चि.अश्वगन्धातैले । जातीफले । रा.नि.व.१२ । वै.निघ.२भ.अ.च.चि. पिप्पल्यादिचूर्णे । [दमूले । त्रिका. ।

**शालूकः** । पुं । मण्डूके । रा.नि.व.१९ । पद्मा-

**शालूरः** । पुं। भेके । अम.। पद्मकन्दे । वै.निघ.।

**शालूरपर्णी** । स्त्री । ब्रह्मीशाके । বিম্মীশাক। “शालूरपर्णीमालूर ।” भा.म.१भ.जिह्मकज्व.चि.।

**शालूरकः** । पुं। पुरीषजक्रिमिभेदे। च.वि.७अ.।

**शालेयः** । पुं । मधुरिकायाम् । रा.नि.व.४ । च.सू.२७अ. । क्ली.। शालिधान्यक्षेत्रे । रा.नि.व.२। बालमूलके । भा.पू.१भ.शा.व. । स्त्री । मिश्रेयायाम् । মৌরি । रा.नि.व.४ । शतपुष्पायाम् । वै.निघ. ।

**शाल्मलः (कः)** । पुं। मोचरसे । रा.नि.व.८। भैष.स्त्रीरो.प्रदरारिरसे । शाल्मलीवृक्षे । শিমুল গাছ । श.र. ।

**शाल्मलिः** । पुं, स्त्री । (Bombax malabarica. Syn.Salmalica malabarica.) स्वनामख्यातमहातरौ । শিমুল গাছ। हिं शेम्बल, शेमुर । उत् बौन्री । ता.पुला । मं शांवरि । प.मु. । गुणाः—वृष्यो बल्यः स्वादुः शीतः कषायो लघुः स्निग्धः शुक्रश्लेष्मवर्द्धनश्च । तद्रसस्तद्गुणएव, ग्राही कषायश्च । तत्पुष्पफलमपि तत्समगुणमेव । रा.नि.व.८ । तत्पुष्पं घृतसैन्धवसाधितं प्रदरघ्नं रसे पाके च मधुरं कषायं गुरु शीतलं ग्राहि वातलञ्च । भा.पू.१भ.शा.व. । क्रिमिमेहघ्नं रूक्षमुष्णं पाके कटु लघु वातकफघ्नञ्च । सु.सू.४६अ. । च.द.वन्दजज्व.चि.त्रिफलादौ । “त्रिफला शाल्मली रास्ना ।”

**शाल्मलिकः** । पुं । रोहितकवृक्षे । রক্তরোড়া । रा.नि.व.७ । च.वि.८अ. ।

**शाल्मलिनी** । स्त्री । शाल्मलिवृक्षे । श.र. ।

**शाल्मलिपत्रकः** । पुं। सप्तपर्णवृक्षे । ছাতিম গাছ । रा.नि.व.१२ ।

**शाल्मली** । स्त्री । शाल्मलिवृक्षे । শিমুল গাছ। अम.। मोचरसे । च.सू.४ । शिंशपावृक्षे । त्रिका. ।

**शाल्मलीकण्टकः** । पुं । प्रसिद्धः । শিমুল কাঁটা । अयं व्यङ्गघ्नः । वा.उ.३२अ. ।

**शाल्मलीकन्दः** । पुं । स्वनामख्यातमहाकन्दे। स भागीरथीतीरे प्रसिद्धः । शांवरीकन्द इति च महाराष्ट्रादौ ख्यातः । শিমুল [illegible]ছের মূল । गुणाः—मधुरः मलसारणः [illegible]ः पित्तदाहशोफसन्तापघ्नश्च । रा.नि.व.७ । [स्नाकल्पभेदे । ज.द. ।

**शाल्मलीकल्पः** । पुं । वैद्यशास्त्रान्तर्गतचिकि-

**शाल्मलीफलः** । पुं । तेजःफलवृक्षे । रा.नि.व.११ ।

**शाल्मलीफलकम्** । क्ली । क्षुरादिशस्त्राणां धारासंस्थापनार्थाकर्कशकाष्ठपट्टके । सु.सू.८।९अ.।

**शाल्मलीवेष्टः (कः)** । पुं । मोचरसे । শিমুল আটা । रा.न.व.८ । भा.म.१भ.अ.सा.चि. समङ्गादिचूर्णे । “शाल्मलीवेष्टको रोध्रः ।”

**शाल्मलीसत्त्वनिर्यासः** । पुं । मोचरसे । भैष.ध्वजभ.चि. । रस.र.कामदीपकरसे ।

**शाल्वणस्वेदः** । पुं । वातव्याधौ स्वेदविशेषे ।

यथा –"काकोल्यादिः सवातघ्नः सर्व्वाम्लद्रव्यसंयुतः। सानूपौदकमांसस्तु सर्वस्नेहसमन्वितः। सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः। तेनोपनाहं कुर्वीत सर्व्वदा वातरोगिणाम्।" सु. चि.४अ.। "वातघ्नो भद्रदार्व्वादिः काकोल्यादिश्च मौयुतः। मांसेनाचौषधं तुल्यं यावदम्लेन चाम्लता। पट्टी स्यात् स्वेदनार्थञ्च काञ्जिकाद्यम्लमिष्यते। चतुःस्नेहोऽत्र तावान् स्यात् सुस्निग्धत्वं यतो भवेत्। समस्तं वर्गमर्द्धं वा यथालाभमथापि वा। प्रयुञ्जीतेति वचनं सर्व्वत्र गणकर्म्मणि .....।" शाल्वणस्वेदः। জীবনীয়দশক, গুড়ূচী, কাঁকড়াশৃঙ্গী, বংশলোচনা, পদ্মকাষ্ঠ, ঋদ্ধি, বৃদ্ধি, দেবদারু, কুড়, হরিদ্রা, বরুণত্বক্, মেষশৃঙ্গী, বাড়িয়ালা, গোরক্ষচাকুলিয়া, আলাকুশী, শণ, ঝাটী, শ্বেত আকন্দ, গুলুঞ্চ, গোক্ষুর, পাষাণভেদ, রক্ত আকন্দ,শতমূলী, পুনর্নবা, বজ্র আটা, ধুতুরা, বামনহাটী, বিছাতি, যব, কুল, কুলথ এবং দশমূল, প্রত্যেকে ৯ মাষা মিলিত ৮ পল। च.द.वा.व्या.चि.।

**शाव: (कः)** । पुं। शिशौ। रा.नि.व.१८।

**शावर:** । पुं। शबरलोध्रे। পাটিয়ালোধ। मे.। भा.म.४भ.नेत्ररोगचि.। "अरिष्टदलशावर...।"

**शावरकरोध्र:** । पुं। अक्षिभेषजापरसंज्ञे स्वनामख्याततरौ। পাটিয়ালোধ। वा.सू.१५अ. रोध्रादौ।

**शावरभेदाख्य(च)म्** । क्ली। ताम्रे। हे.च.।

**शावरी** । स्त्री। शूकशिम्ब्याम्। আলাকুশী। मे.।

**शाष्कुल:** । त्रि। मांसाशिनि। हे.च.।

**शिंशपा** । पुं। (Dalbergia śiśu.) A Timber tree. स्वनामख्याततरौ। শিশু গাছ। हिं शीशव,शिशु,शीसह। तें शिशुकर्र। ता. गाशुक्कुकट्ट। पंशकेदर्। सा त्रिधा कृष्णश्वेतपीतभेदेन। सा.गुणा:—तिक्ता कटूष्णा कफवातघ्नी दीपनी शोथातिसारघ्नी च। "श्वेतादिशिंशपा तिक्ता शिशिरा पित्तदाहनुत्। कपिला शिंशपा तिक्ता शीतवीर्य्या श्रमापहा। वातपित्तज्वरघ्नी च छर्दिहिक्काविनाशिनी। शिंशपात्रितयं वर्ण्यं हिमशोफविसर्पजित्। पित्तदाहप्रशमनं बल्यं रुचिकरं परम्।" रा.नि.व.९।

**शिकतावलम्बनम्** । क्ली। जलस्य शीतलीकरणोपायविशेषे। सु.सू.४५अ.।

**शिक्थ(क)म्** । क्ली। मधूच्छिष्टे। मम। गुणाः—पिच्छिलं स्वादु कुष्ठवातरक्तघ्नं कटु मृदु स्निग्धं लेपेन स्फुटिताङ्गविलोपनञ्च। रा.नि.व.१३।

**शिक्यम्** । क्ली। द्रव्यरक्षणार्थं रज्जुकृताधारे। শিকা। श.र.। जलप्रसादनार्थं पात्ररक्षणाधारविशेषे। सु.सू.४५अ.।

**शिखण्ड: (कः)** । पुं। मयूरपुच्छे। अम.। काकपक्षे। জুলপি। मे.। श.र.।

**शिखण्डिक:** । पुं। कुक्कुटे। भा.।

**शिखण्डिनी** । स्त्री। गुञ्जालतायाम्। प.मु. र.सा.सं.रसप्रकरणे। यूथिकायाम्। र.मा.।

**शिखण्डी** (इन्) । मयूरे। मयूरपुच्छे। मे.। कुक्कुटे। हे च.। स्त्री। गुञ्जालतायाम्। रा.नि. व.३। स्वर्णयूथिकायाम्। रा.नि.व.१०।

**शिखरम्** । क्ली। पुलके। রোমাঞ্চ। माणिक्यविशेषे। त्रिका.। कक्षे। मे.।

**शिखरा** । स्त्री। मूर्व्वायां। মূর্গা। श.च.।

**शिखरिचरणम्** । क्ली। अपामार्गमूले। वै. निघ.२भ.उन्मा.चि.। नि.रो.चि.भा.म.४भ.।

**शिखरिज:** । पुं। अपामार्गे। আপাং। भेष.

**शिखरिणी** । स्त्री। दधिजले। द्राक्षान्तरे। रोमराज्याम्। मे.। रा.नि.व.२३। नवमल्लिकायाम्। रा.नि.व.१०।२३। तन्नामकमन्थानविशेषे। तत्र द्रव्याणि दधि, ३२ पलं खण्डस्याष्टपलानि तत्परिमितं मरिचचूर्णं त्वगेलाचूर्णञ्च, मध्वाज्ययोः प्रत्येकं पलचतुष्टयम्, एकत्र भाण्डे संस्थाप्य हिमवासिता शिखरिणीत्युच्यते। रा.नि.व.२२। एवं मल्लिकादयो बहुविधशिखरिण्योऽपि याः। मूर्व्वायां। श.च.। [মোঁকা। श.च.।

**शिखरिलोहित:** । पुं। भूकदम्बे। कुकुन्द्रे।

**शिखरी** (इन्) । पुं। कुन्दुरौ। কুন্দুরুখোটি। रा.नि.व.१२। सामान्यपावनाले। जनारे। रा.नि.व.१६ मृगान्तरे। तन्मांसं लघु हृद्यं

